

श्री रघुवर्यतीर्थविरचितं

# रघुनाथविजयम्

# RAGHUNĀTHAVIJAYA
OF
SRI RAGHUVARYATĪRTHA

*General Editor* :
**Vidwan Dr. H. P. Malledevaru, M.A., Ph.D.**

*Editor* :
**H. Shankarganapathi Phatak, M.A.**
**Śiromani Vidwan, Kalānipuṇa**

प्राच्यविद्यासंशोधनालयः
**ORIENTAL RESEARCH INSTITUTE, MYSORE**
**1985**

*Price* : **Rs. 7-50**

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE, SERIES No. 152

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला – १५२

# RAGHUNATHAVIJAYAM

OF

SRI RAGHUVARYATIRTHA

श्रीरघुवर्यतीर्थविरचितं

# रघुनाथविजयम्

ORIENTAL RESEARCH INSTITUTE
MYSORE

1985

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES-152

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला–१५२

GENERAL EDITOR

**Vidwan Dr. H. P. Malledevaru**, M.A., Ph.D.
Professor and Head,
Department of P. G. Studies and Research
in Sanskrit, Manasagangotri, Mysore, and

DIRECTOR

Oriental Research Institute,
University of Mysore, MYSORE

ORIENTAL RESEARCH INSTITUTE, MYSORE-5

1985

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला–१५२

श्रीरघुवर्यतीर्थविरचितं

# रघुनाथविजयम्

# RAGHUNATHAVIJAYAM

OF

SRI RAGHUVARYATIRTHA

EDITED BY

**H. SHANKARGANAPATHI PHATAK, M.A.**
Siromani, Vidwan, Kalanipuna
Research Assistant,
Oriental Research Institute, Mysore

प्राच्यविद्यासंशोधनालयः

ORIENTAL RESEARCH INSTITUTE, MYSORE

1985

# FOREWORD

The Oriental Research Institute, Mysore is happy to present the "Raghunathavijaya" of Sri Raghuvarya Teertha to the lovers of Sanskrit and admirers of devotional poetry. It is hoped that this work will be received warmly by the scholarly world.

**The Work** : The Raghunathavijaya is a charming work possessing special merits. **Firstly**, it is a poem suffused by Bhakti and devoted to delineate the immortal story of Sri Rama. **Secondly**, it intends to teach prosody in a unique way. Each verse is composed in a different metre and is actually an illustration of one of the various metres expounded in the Vrittaratnakara of Kedara Bhatta. The order of the metres in the Vrittaratnakara is also faithfully followed. All the Matravrittas and the Aksharavrittas as well as Dandakas are thus illustrated. **Thirdly**, it is a work by a famous pontiff of Udupi Phalimaru Matha, a haven of great scholars in the Dvaita Philosophy. Hence it contains valuable philosophical matter fused in poetic descriptions.

It is very rarely that one comes across a work which exhibits the astounding mastery of its author on prosody. A few examples that may be cited here are :

(1) Varahamihira's Brihatsamhita, a voluminous work on Astrology, contains examples of

many vrittas in the **104th** chapter which is aptly called " Srutisukhadavritta sangraha ".

(2) Nyayarakshamani of Appayyadikshita is a work on Advaitavedanta. It contains stanzas composed in more than hundred different metres. The author has used a different metre for each of the Adhikaranas in Brahmasutras according to Advaita system.

(3) Shivanamakalpalatalavala of Bhaskararaya is a stotra-kavya in which the author has composed 108 stanzas in as many metres to describe the Shivastottarasatanamavali. The present work thus occupies a special place in Sanskrit Literature.

**The Author :** As already stated, the author of the present work was a pontiff of the well-known Phalimaru Matha of Udupi. Sri Madhvacharya, who founded the Dvaita school of Philosophy, established eight Mathas at Udupi for propagation of his teachings. The Mathas are situated around the Krishna temple at the town of Udupi. Each of the Mathas has a guruparampara starting with a direct disciple of Madhvacharya, One such Matha is called Phalimaru Matha. The Chief deity adored in that Matha is Lord Rama. Hence, it is quite befitting that the author, being an adorer of Rama, wrote the present poem.

The author's name was Raghuvaryateertha. His precesptor was Ramabhadra Teertha, who took the Samnyasa from Raghuttama Teertha. Both

these gurus were alive during the author's time (A.D. 1630-1712) and both taught him many Sastras.

Following the tradition of Dvaitacharyas, Sri Raghuvarya Teertha taught the famous Nyayasudha of Jayateertha seven times to his disciples. He also travelled extensively all over India. Besides the present work, he has many other works to his credit. Laghupariksha (or Raghupariksha) on nyaya, a commentary on Narayana Panditacharya's Prameyaratnamalika and a Krishna stuti in Kannada are some of his known works. Other details regarding the author and the work are dealt with in detail by the editor in his Sanskrit Introduction.

It is a pleasant duty to thank all those that are responsible for the publication of this work. Prof. K. S. Hegde, Vice-Chancellor, University of Mysore is the inspiration behind these publications. Sri V. C. Hullur, I. A. S., Registrar, University of Mysore, is extending all help to the research activities of the Institute. The members of the Mysore University Syndicate and the members of the Oriental Research Institute Advisory Committee are giving valuable advice. I take this opportunity to express our gratitude to all these authorities.

The munificent grant from the Government of India and Government of Karnataka has made it possible to bring out the following publications :

1) Shivatattva ratnakara (Vol. III)
2) Nyayamanjari (Vol. II)
3) Descriptive Catalogue (Vol. IX)
4) Vatulashuddhagama (Vol. I)
5) Yogashataka
6) Vatulashuddhagama (Vol. II)
7) Brahmasutrabhasya (Vol. I)
8) Madhaviya dhatuvritti (Vol. I)
9) Brahmasutrabhasya (Vol. II)
10) Bodhayanagrihyasutra
11) Raghunathavijaya
12) Shivanamakalpalatalavala
13) Descriptive Catalogue (Vol. X)

and the following books are in the Press :

14) Siddhanta Siddhanjana
15) Trivenika
16) Tarkatandava
17) Veeragama
18) Descriptive Catalogue (Vol. 7A)
19) Anubhasya with commentaries
20) Arthashastra of Kautilya
21) Vrittaratnavali
22) Apastamba Srautasutra
23) Pancatantra sangraha
24) Veeragama (Vol. II)
25) Descriptive Catalogue (Vol. XI)

Vidwan H. Shankaraganapathi Phatak, Research Assistant, Oriental Research Institute, Mysore, has edited this work with the help of the manuscripts of the work available in our Institute

and also in Sri Palimaru Matha, Udupi. He has also elucidated the meanings of the poems where-ever necessary in addition to explaining the metres.

The Ford Foundation has been giving financial aid to the Oriental Research Institute to acquire the latest Microfilm Equipment and to conduct a Manuscript Conservation Programme. I wish to express our gratitude to the benevolent authorities of the Ford Foundation, New Delhi. So far the Institute has acquired the Dokumator Microfilm Camera from West Germany and the Hirakawa 35 Portable Microfilm Camera from Japan with the Ford Foundation's aid. Other equipments will also be acquired shortly and the Institute will have a well-equipped Microfilm Section which will enable us to microfilm precious manuscripts and to meet the demand of the scholars of both India and abroad for microfilm copies of valuable manuscripts.

Sri Vidyamanya Teertha Swamiji of Sri Phalimaru Matha, Udupi, kindly permitted us to use the Manuscript in the Matha and Sri Vidyavacaspati Bannanje Govindacharya rendered gracious help in collating the manuscript.

M/s Chaaritra Printers, Mysore have printed this book with a nice get up at a short period. Thanks are due to all above.

H. P. MALLEDEVARU

# उपोद्घातः

भारतीयं संस्कृतवाङ्मयं गद्यात्मकं, पद्यात्मकं, तदुभयात्मकमिति सामान्यतस्त्रेधा विभज्यते। तत्र गद्यरूपस्य साहित्यस्य न तादृशो लयात्मको नियमविशेषो विद्यते यादृशोऽस्ति पद्यात्मकस्य साहित्यसमुदायस्य। गद्यपद्योभयरूपत्वात् स्वच्छाच्छतरस्वच्छन्दशैलीनिबद्धा वैदर्भ्याद्याभी रीतिभी रतिमादधाना, समग्रैरपि काव्यसौन्दर्यविवर्द्धनैर्गुणगणैस्समेधमाना चम्पूः कस्य वा सहृदयस्य हृदयारविन्दं विकसितं, मनश्च प्रफुल्लं न कुर्यात्। विमिश्रितं नवनवीनैर्बहुविधैः रसैः नवं पानकमिव, रुचिविशेषेण चम्पूरप्याकम्पयति नैकधा सुचेतसां शिरांसि।

नैतत्केवलं चम्पूप्रशंसनं, तदितरकाव्यभेदानामवगुणाधानं वा। गद्यं तु कवीनां निकषमिति जुघुषुः पुराणकवयः। केवलपद्यकाव्यं च कविताकामिन्याः वशीकरणतन्त्रमेव। तस्मिन् काव्यक्षेत्रे कवेः वैदुष्यं, पाटवं गुञ्जत्पदपुञ्जसंगुम्फनपाण्डित्यं, तच्च परिमितस्थले, मार्गयितुं सुकरम्।

कालिदासभारविमाघादिकविपुङ्गवा अनेके आत्मनो बन्धुरबन्धनिर्माणपाटवं स्वकीयनिर्मितिषु प्रदर्शयन्तः अद्यापि रसिकसमाजे यशःशरीरैः विराजन्ते। कविता वनिता चैव स्वयमेवागता वरा भवति। बलप्रयोगेण समुचितपदपादान्वेषणार्थं निःशङ्कं, निश्शब्दं च प्रयासमुद्वहद्भिः यथाकथञ्चिन्निर्मीयमाणा कविता न कविता। सा तु विरसा पदावलिः।

स्वतन्त्रस्य कवेः स्वविरचनासु स्वातन्त्र्यमुपयुञ्जानस्य धीमतः, धीशक्तिं तत्र तत्र द्रष्टुं प्रभवामः। तच्च भवेत् काव्यं, मुक्तकं, लघुकाव्यं महाकाव्यं नाटकं यत्किमपि वा।

परं अन्यत्किमपि लक्षणादिकमुद्दिश्य विरचितेषु उदाहरणरूपप्रबन्धेषु कविः स्वप्रतिभाप्रवाहे पूर्णं स्वातन्त्र्यं प्रयोक्तुमशक्तो भवेद्यद्यपि स कुशलः।

यत्र परं परायत्ततयापि स्वरचनासु निरर्गलतां स्वच्छन्दतां च प्रदर्शयेत्स तु वन्द्यो भवति । परायत्ते लक्ष्यलक्षणनिर्माणपद्धतिरपि द्विविधा । खण्डलक्ष्यनिर्मितिः । कथां कामपि परिगृह्य तदनुसारेण खण्डलक्ष्यनिर्माणमिति च ।

प्रतापरुद्रयशोभूषणादिषु रूपकोदाहरणतया प्रकल्पितं नाटकं उभाभ्यामपि भिन्नम् । रामायणमहाभारतादीनामाकरेण स्वकथाया आकारपरिकल्पनं येन कविना क्रियते, तेनाऽप्रतिमप्रतिभाभाजा भाव्यम् ।

रघुनाथविजयाख्योऽयं प्रकृतो ग्रन्थः कोटिमिमामुपारूढोऽस्ति ।

संस्कृतसाहित्ये वृत्तलक्षणलक्ष्यनिरूपकेषु छन्दःशास्त्रग्रन्थेषु नितान्तं जनप्रियः वृत्तरत्नाकरः । वृत्तरत्नाकरात्पूर्वमुत्तरत्रापि निबद्धाः बहवः छन्दोग्रन्थाः उपलभ्यन्ते । तथापि वृत्तरत्नाकरः विपश्चितां विद्यार्थिनां सर्वेषामपि आदरस्य पात्रमभवत् । कारणं त्वस्य, तस्य सुलभग्राह्यता लक्ष्यानां लक्षणरूपेणैव कथनं च ।

छन्दःप्रकारो द्विविधः । वैदिकलौकिकभेदात् । पादसंख्ययाऽक्षरसंख्यया च प्रसिद्धस्य वैदिकछन्दसः गायत्र्यनुष्टुप्जगतीत्यादि प्रकारैर्व्यवहारः । वैदिकछन्दस्सु एकाक्षरद्व्यक्षरन्यूनाधिकतयापि छन्दः दुष्टं दुर्निरूपितं वा न भवतीति ऐतरेयब्राह्मणे स्पष्टीक्रियते । यद्यथा—

न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्

ऐ.ब्रा. १,१६

न ह्येकेनाक्षरेणान्यच्छन्दो भवति न द्वाभ्याम्

सां.ब्रा. २७,१

पिङ्गलाचार्यः ऊनाधिकाक्षरत्वं वृत्तस्य संज्ञान्तरकारणं भवतीति अभिप्रेत्याह ।

ऊनाधिकेनैकेन निचृद्भुरिजौ ।
द्वाभ्यां विराड्स्वराजौ । छं.शा. ३ ५९-६०

एकाक्षरोनाधिकतायामुदाहरणे यथा—

अग्निमिन्धानो मनसा (८) धियं सचेत मर्त्यः (७)
अग्निमीधे विवस्वभिः (८) ऋ. ८,१०२,२२
परि द्युक्षः सनद्रयि (८) भरद्वाजं नो अन्धसा (८)
सुमनो अर्ष पवित्र आ (९) ऋ. ६,५२,१

अक्षरद्वयन्यूनाधिकतायामुदाहरणे यथा—

राजन्तमध्वराणां (७) गोपामृतस्य दीदिविम् (८)
वर्धमानं स्वे दमे (७) ऋ. १,१,८
जोषा सवितर्यस्य ते (८) हरः शतं स वा अर्हति (९)
पाहि नो दिद्युतः पतन्त्याः (९) ऋ. १०,१५८,२

लौकिकेषु छन्दस्सु एवंविधन्यूनाधिकता न दृश्यते । इत्थं प्रवर्तितं छन्दःशास्त्रं वेदाङ्गमिति परिगणितमस्ति ।

तथा च मुण्डकोपनिषदि अङ्गिरोवचनम्—

"तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति ।"

पाणिनीयशिक्षायां यथा—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ कथ्यते ।
ज्योतिषामयनं नेत्रं निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥

अमरसिंहोऽप्येवमाह—

शिक्षा व्याकरणं छन्दः निरुक्तं ज्योतिषं तथा ।
कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ।

एवमादिभिर्निर्वचनैः छन्दःशास्त्रस्य वेदाङ्गतायां सिद्धायां, येनकेनापि प्रकारेण तस्य अवश्यग्राह्यत्वं प्रोक्तं भवति । छन्दांसि श्रुतीनां चरणत्वेन प्रतिपाद्यन्ते । अतः वेदकालादारभ्याद्यावधि साहित्यशास्त्रे परमावश्यतां प्राप्तेषु शास्त्रेषु छन्दःशास्त्रमेकम् ।

अस्य छन्दःशास्त्रस्य प्रथमो लाक्षणिकः पिङ्गलनागः । अस्मात्पूर्वं यास्क-ताण्डि-सैतव-काश्यप-रातमाण्डव्यप्रभृतयः छान्दोलक्षणज्ञा ग्रन्थकाराः आसन्निति पिङ्गलशास्त्रे वृत्तरत्नाकरे च स्पष्टतया सूचितमस्ति । परन्तु वैदिक-लौकिकानां छन्दसां विस्तरतो विवेकः पैङ्गल एवोपलभ्यते । लौकिक-वृत्तानामेव विशेषतो निरूपणं तु वृत्तरत्नाकरे उपलभ्यते । अयमर्वाचीन-छन्दःशास्त्रविमर्शग्रन्थः । असौ क्रिस्तीयैकादशशतकात्प्राचीन इति विमर्शकानामाशयः ।

पव्येक/पव्वेकनाम्ना प्रसिद्धस्य शिवभक्तशिरोमणेः पुत्रः केदारनामा-काश्यपगोत्रः । स एव वृत्तरत्नाकराख्यस्य ग्रन्थरत्नस्य रचयिता । षडध्या-यात्मके वृत्तरत्नाकरे परिभाषामात्रावृत्तसमवृत्तार्धसमवृत्तवर्णविषमवृत्तप्रस्ताराणां निरूपणं क्रियते ।

षडध्यायेषु आद्यन्तौ परित्यज्य लक्षणाध्यायानामुदाहरणरूपं श्रीराम-[illegible] प्रकृते ग्रन्थे पश्यामः । आर्यावृत्तमारभ्य ग्रन्थान्तं यावत् समग्रभावेन [illegible]प्रतिमास्खलितावर्णनीयकवित्वशक्त्या सुचारुरूपेण सङ्कलितं रघुनाथविज-[illegible]ये ग्रन्थरत्नं श्रीचरणानां छन्दश्शास्त्रज्ञानस्य प्रतिविम्बमिव शोभते ।

दक्षिणकर्णाटकविभागे प्रसिद्धयात्राक्षेत्रतया शोभमानस्य उडुपी-त्याख्यस्य पट्टणस्य मध्ये विराजमानस्य श्रीकृष्णमन्दिरस्य बहिः वृत्ताकारेण श्रीमन्मध्वाचार्यैः स्थापिताः अष्टौ मठाः राजन्ते । यत्र विराजमानाः पीठाधिपतयः यतिवरेण्याः श्रीकृष्णपादारविन्दपूजनं निर्वहन्ति । तेष्वेको मठः फलिमारुनामकः । फलिमारुमठस्य गुरुपरम्पराया आराध्यो भगवान् श्रीरामचन्द्रः । अत एव श्रीरघुवर्यतीर्थैः आत्मनः उपास्यमूर्तेः स्तवं वृत्तरत्नाकरोदाहरणव्याजेन कृतमिति विभाव्यते ।

मङ्गलाचरणे सीतासौमित्रिहनूमत्समेतं कोदण्डपाणिं रघुवरं प्रणमन्ति श्रीरघुवर्यतीर्थाः । अनन्तरं सम्प्रदायापतितं गुरुवन्दनं विदधते । श्रीमन्-मध्वाचार्यान् तन्महिमप्रदर्शनपूर्वकं नमस्कृत्यानन्तरं श्रीजयतीर्थव्यासवादिराज-गुरून्प्रणमन्ति । अनन्तरं स्वगुरुपरमगुरुवन्दनायोपक्रमन्ते ।

एषां यतिवराणां बाल्यसंन्यासदीक्षाकाले श्रीफलिमारुमठे एषां गुरवः परमगुरवश्चासन्निति ज्ञायते । श्रीमठोपलब्धाधारैः एतत्काव्यगतकविवाग्भि-श्चास्माकमेतत्सुस्पष्टं भवति यद् रघूत्तमतीर्थाः श्रीरघुवर्याणां परमगुरवः सन्तः निखिलमपि श्रीमन्मध्ववाङ्मयं सुचारुरूपेण स्वपरमशिष्यायोपादिदिशुरिति । एवमेव साहित्यशास्त्रे छन्दश्शास्त्रे वेदान्तेतरशास्त्रेषु परिणतिरेभिः स्वगुरूणां श्रीरामचन्द्रतीर्थानां सकाशाल्लब्धा ।

एते कविवराः कालिदासादिवदतीव विनयगुणोपेताः । सत्यपि महति पाण्डित्ये अनसूयावतां पण्डितवरेण्यानां दयामात्मन्यवस्थापयन्ति । विद्यावतां परमभूषणं खल्वेतत् ।

अनन्तरं श्रीरामचन्द्रस्यैव चरितवर्णने उद्यतस्य आत्मनः तत्कार्यं सयुक्तिकमुपपाद्य द्वादशे श्लोके श्रीमतो नारायणस्यावतरणेच्छाप्रकटनपूर्वकं काव्यारम्भं कुर्वन्ति ‘कमलेशो भूभरहृत्यै’ इत्यादिश्लोकेन ।

श्रीचरणैः स्वकीयकाव्ये संसूचितं रामादीनामुत्पत्तिविषयं वाल्मीकि-रामायणेन साकं तुलयित्वा किञ्चित्प्रस्तोतव्यं भवति ।

अस्मिन् काव्ये रामादीनामुत्पत्तिविषये—

अथो हरी राम इत्यभूत्कौसल्यायां तन्तुजाद्रवेः ।
दशादिरथनामकान्नृपादैन्द्र्यां दिशि पीयूषरश्मिवत् ॥
अथ लक्ष्मणनामकः सुतो जातवान् नृपतितोऽस्य चानुजः ।
अपरत्र कलत्र ऊर्जितो भूप एभिरखिलार्थभागिव ॥ र.वि.१४,१५

इत्युक्तमस्ति । अनयोः श्लोकयोः केवलं श्रीरामस्य तथा लक्ष्मणस्य ानिर्निरूपिताऽस्ति । भरतशत्रुघ्नयोर्विषये स्पष्टं निरूपणं न दृश्यते । तथा च राममनु लक्ष्मणो जज्ञे इति च प्रोक्तमस्ति ।

वाल्मीकिरामायणे तु श्रीरामजननानन्तरं भरतः तदनन्तरं यमलयोः सुमित्रापुत्रयोः लक्ष्मणशत्रुघ्नयोरुत्पत्तिक्रमो वर्णितोऽस्ति ।

श्रीमदाचार्याणां भारततात्पर्यनिर्णये श्रीरामादनन्तरं शेषावतारभूतो लक्ष्मणः जातस्तमनु भरतः शत्रुघ्नश्चान्ते इति दृश्यते । यथा —

तावेव जातौ भरतश्च नाम्ना
शत्रुघ्न इत्येव च रामतोऽनु ।
पूर्वं सुमित्रातनयश्च शेषः
स लक्ष्मणो नाम रघूत्तमादनु ॥

म.भा.ता.नि.अ. ३ श्लो. ७८

अयमेव क्रमः अस्मिन्काव्येऽपि दृश्यते । जनार्दनभट्टीयपदार्थदीपिकायां च लक्ष्मणस्य भरतात्पूर्वजत्वं युक्तिभिः प्रतिपादितमस्ति । 'सीताया लक्ष्मणस्यापि ववन्दे चरणावसौ' इत्यादिस्थले ।

नक्षत्राणामानुपूर्व्या वाल्मीकिरामायणगतदाशरथ्युत्पत्तिविषये रामभरतलक्ष्मणशत्रुघ्नरूपः क्रमः सुस्पष्टं निर्दिष्टोऽस्ति। स च श्रीरामः पुनर्वसुनक्षत्रे, भरतः पुष्ये, आश्लेषायां सौमित्री इति। एवं वाल्मीकिरामायणस्य तदुत्तरकालीनैतादृशग्रन्थानां चास्मिन् विषये कश्चन भिन्नोऽभिप्रायः सुस्थ एव।

अथ पायसभागग्रहणविषयेण यदि विविच्यते तदा— 'अग्निदत्तपायसे सममर्धं भागं कौसल्या प्रथमतयाऽलभत। अवशिष्टेऽर्धेऽर्धं भागं सुमित्रा कौसल्यामनु अगृह्णात्। एवं पायसस्य चतुर्षु अंशेषु त्रयोंऽशाः वितीर्णाः। पादभागेऽवशिष्टे तदर्धं कैकेयी अलभत। एवं अष्टभागात्मकेषु एको भागः कैकेय्या प्राप्तः। अपरोऽष्टमो भागः दशरथमतानुसारेण पुनः सुमित्रया लब्धः।

यद्यपि सुमित्रया कौसल्यानन्तरं पायसं लब्धं तथापि तया पायसभक्षणं कैकेयीकृतपायसभक्षणानन्तरमेव कृतं स्यात्। अतः राममनु भरतस्यैवजनिः।

ततो लक्ष्मणमासाद्य वैदेहीं च परन्तपः।
अभ्यवादयत प्रीतो भरतो नाम चाब्रवीत्।

वा.रा.यु.कां.अ.१२७ श्लो.३८

इत्यत्र भरतेन लक्ष्मणस्यासादनमात्रं क्रियते। प्रणतिस्तु सीतायाः।
जन्मज्येष्ठतां मनुरेवं समर्थयति—

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः।
न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते॥
जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम्।

म.स्मृ.अ.९ श्लो.१२५-१२६

कथं तर्हि लक्ष्मणः शेषांशः रामाव्यवहितावरजः इति बहुत्र साध्यते। तत्रैवं समाधीयेत। दशरथस्य द्वितीया पत्नी सुमित्रा, कैकेयी च तृतीया।

यद्यपि भरत एव प्रथममुत्पन्नः तथापि ज्यायसी सुमित्रैवेति अवरजस्यापि लक्ष्मणस्य अव्यवहितरामानुजत्वम् । प्रसङ्गाज्ज्यायस्त्वं च ।

अस्मिन्काव्ये श्रीमदाचार्यमतानुसारेण श्रीचरणैरपि लक्ष्मणस्य दशरथ-द्वितीयपुत्रत्वं प्रोक्तमस्ति । वाल्मीकिरामायणेन साकं तुलनात्मके प्रस्तावे एषां पुत्राणां पौर्वापर्यविनिर्णयविचारं प्रकटयितुकामेनायं विषयः समुद्घाटितः न तु श्रीचरणानामभिमतविषयविरोधार्थं, प्रत्याख्यानार्थं वा । कवेः सर्वत्र समुचितयुक्तिप्रकाशने स्वातन्त्र्यं त्वबाधितमेव । आस्तां तावत् ।

अस्मिन् काव्येऽहल्याशापमोक्षप्रसङ्गः उत्तरत्र प्रजाजनानां मुखेभ्यः श्रीरामचन्द्रस्तुत्युपोबोद्बलकत्वेन निरूप्यते ।

'येन पदा स्पृष्टशिला मीनदृगास क्षितिप'

इत्यादिना अहल्याशापनिवृत्तिकथानकं श्रीरामशक्तिद्योतनाय सूचितमस्ति ।

कुरङ्गदैत्यकथानकसूचनं श्रीमदाचार्यमतमनुसृत्यैव कृतमस्ति । वाल्मीकिस्तु अक्षिराक्षसस्य नामग्रहणं विनैव सुन्दरकाण्डे सीतामुखेन एतं वृत्तान्तं प्रकाशयति ।

सहेतुको वालिवधप्रसङ्गः श्रीमद्भारततात्पर्यनिर्णयमार्गेणैव प्रतिपादितोऽस्ति । वाल्मीकिरामायणगतोऽयं प्रसङ्गः जिज्ञासूनां प्रश्नान् तथा न समाधत्ते यथा भारततात्पर्ययस्थः इति ममाभिप्रायः ।

एवं तत्र तत्र निवेशितानां प्रतिपाद्यविषयस्य शक्त्युपोद्बलकानां सुभाषितानां संग्रहस्तु नितरां प्रशंसार्हः । काव्यधर्मानुरोधेन तच्छोभाविवर्धकानि तानि पुनः पुनरनुसन्धातुं योग्यानीत्यत्र नास्ति संशयकणिका ।

इन्द्रजित्प्रमुक्तब्रह्मास्त्रबद्धेन हनूमता लङ्कां प्रविश्य पिशिताशनेशितुः पुरः प्रवर्तितसम्भाषणप्रक्रमादारभ्य सेतुबन्धनपर्यन्तं यावद् वर्णितो दण्डक-

पुञ्जः सुसन्दर्भनिबद्धः उक्तिप्रत्युक्तीनां लयात्मकं रूपं दिशति । पयोधिसेतु-बन्धनवेळायां वेलामतिक्रम्यातिवेलं गर्विष्ठस्योदधेर्गर्वभङ्गप्रस्तावे रिङ्गत्तरङ्गलयेन साकं नरगणलयमासाद्यासौ बद्धो दण्डकः कस्य वा हृदयावर्जको न भवेत् । स्वकल्पनाविलासविलसितेन कविनाऽत्र वर्धिता काव्यशोभा । को वाऽस्यै स्वागतं न व्याहरेत् ।

## कविः

एतत्काव्यनिर्मातॄणां विषये पूर्वमेव प्रास्ताविकतया किञ्चिदुक्तम् । श्रीरघुवर्याः फलिमारुमठगुरुपरम्परायां स्वकीयवैदुषीविलासेन, श्रीमन्मध्वमत-प्रसारणतत्परतया, सदाचारानुष्ठानसम्प्राप्ततपोबलेन च विभूषिताः क्रिस्तीय-सप्तदशशतके श्रीपादपट्टं अलञ्चक्रुः । श्रीफलिमारुमठे एकस्मिन्नेव काले गुरुत्रयी दीप्यते स्म तदा ।

अत्र कनिष्ठाः श्रीरघुवर्यतीर्थाः । क्रिस्तीय १६७० तमवत्सरा-दारभ्य १७१२ (आहत्य ४२ वर्षाणि) तमवर्षपर्यन्तं एते श्रीपादाः यतिपीठं भूषयामासुः । क्रिस्तीय १७१२, शालिवाहनशके १६३४ माघशुद्ध-षष्ठ्यामेभिः श्रीहरिचरणसरोजसुखानुभूतिः समासादिता । फलिमारुग्रामे एतेषां समाधिस्थलगतं वृन्दावनमद्यापि दृग्गोचरं भवति ।

श्रीरघुवर्याणां गुरवः श्रीरामभद्रतीर्थाः । परमगुरवश्च श्रीरघूत्तम-श्रीपादाः । गुरुद्वयसकाशे शिष्यतां सम्पाद्य श्रीरघुवर्यतीर्थैः काव्ये शास्त्रे च निरुपमं पाण्डित्यं समासादितम् । श्रीमन्मध्वसिद्धान्तसागरतलस्पर्शित्वं त्वेभिः परमगुरूणां कृपाबलेन प्राप्तमिति तान् यतिवरान् सकृतज्ञं नमन्ति कविशिरोमणयः । यथा —

" सुखमुनिशास्त्रमतुल्यं व्याख्यन्मे यो महातपोभूपः ।
वन्दे तं यतितिलकं रघूत्तमाख्यायुतं दयावार्धिम् ॥" र.वि. ६

एवमेव श्रीरामभद्रयतिपुङ्गवान् —

" यत्पादसंश्रयान्मे विनातियत्नेन बुधताऽभूत् ।
तं रामभद्रनाम्ना युतं भजेऽहं गुरुं प्राज्ञमि "त्यनेन भजन्त्येते ।

आभ्यां श्लोकाभ्यां श्रीचरणानां गुरुभक्तिः विशेषेण प्रख्यापिता भवति ।

श्रीरघूत्तमतीर्थाः चतुश्शास्त्रेषु निष्णाता आसन् । शिष्यशिक्षार्थं श्रीमन्न्यायसुधायाः प्रवचनं द्वादशवारं श्रीचरणैः कृतमिति ज्ञायते । स्वमत-प्रचारार्थं प्रतिवादीभान् जेतुं च त्रिवारं यावत् भारतवर्षं सकलं सञ्चार्य पण्डितप्रकाण्डमण्डितायां वाराणस्यां वर्षत्रयं यावदूषुरेते द्वैतसिद्धांत-पञ्चाननाः ।

श्रीरामभद्रतीर्थाः श्रीरघुवर्यतीर्थानां गुरवः । एते च महता वैदुष्येण विराजिताः केळदिसंस्थानाधीशैः नायकैः संमानिता आसन् । एतेषामपि समाधिस्थलं फलिमारुग्रामे दृष्टिगोचरमस्ति । अनयोः श्रीचरणयोः कर-कमलषट्पदायमानानां श्रीरघुवर्यतीर्थानां वैदुषीविषये वक्तव्यं सकलं काव्यमेव वक्ति ऋते तद्व्यवहारेतिवृत्तम् ।

एते श्रीपादाः स्वकीयषोडशवर्ष एव चतुश्शास्त्रपाण्डित्यमधिगम्य विंशतितम एव वर्षे प्राज्ञजनमोददायिनं वृत्तरत्नाकरोदाहरणरूपं रामकथानकं रघुनाथविजयाख्यं व्यरचयन् । लघुपरिभाषा (रघुपरिभाषा) नामकं न्याय-शास्त्रग्रन्थमपि एते व्यलिखन्निति ज्ञायते । एतावत्पर्यन्तमयमप्रकटित इति भाति । श्रीमतां नारायणपण्डिताचार्याणां प्रमेयनवमालिकायाः टीका श्रीरघु-वर्यतीर्थकृतोपलब्धास्ति ।

फलिमारुमठे एतद्ग्रन्थप्रत्यन्वेषणसमये कोऽपि छन्दःशास्त्रलक्षणात्मको ग्रन्थः अस्मद्धस्तगतो बभूव । स तु प्रायः श्रीचरणानामेव कृतिविशेषः

स्यादिति तर्कयामि । यतः अत्र केषाञ्चन छन्दसां नामानि वृत्तरत्नाकर-प्रोक्तनामधेयेभ्यो भिन्नानि केवलमेकद्व्यक्षरव्यत्यासेन सन्ति । अतः प्रायः एतैः लक्ष्यग्रन्थवल्लक्षणग्रन्थोऽपि रचितो भवेदिति ऊहः । उपलब्धया एतत्कर्तृककर्णाटकभाषामय्या श्रीकृष्णस्तुत्या एकयापि एतेषां उभयभाषा-कवित्वशक्तिरुन्नेतुं शक्यते ।

श्रीरघुवर्यतीर्थैः स्वगुरुसंप्रदायानुसारेण समग्रे भारते तीर्थयात्रा व्यधायि । सप्तवारं श्रीमन्न्यायसुधाप्रवचनेन शिष्याः प्रशिक्षिताः । काश्यां विद्वत्-समुदाये वादविवादैः, प्रवचनादिभिश्च स्वमतप्रकर्षः समुद्घोषितः ।

एतेषां विषये तथा तत्कालीनगुरुद्वयविषये च श्रीफलिमारुमठे एतावान् परिचयः उल्लिखितोऽस्ति । श्रीरघुवर्यतीर्थानां विषये इतोप्यधिकतया संशो-धनस्य, विमर्शस्य चावश्यकता विद्यते । प्रायस्तैः शास्त्रेष्वनेकेषु बहवो ग्रन्था आरचिताः स्युरिति विभावयामि । श्रीरघुवर्यतीर्थानां अप्रकाशितानां ग्रन्थाना-मन्वेषणेन, सम्पादनेन, प्रकटनेन च विद्वत्क्षेत्रे महत्किमपि प्राप्तं भवेदिति चिन्तयामि ।

## एतद्ग्रन्थसम्पादनविषये

अस्मत्संस्थायां रघुनाथविजयस्यैकैव मातृकोपलभ्यते । तस्या विवरण-मेवमस्ति । S.B. 979, 17 × 21 cms. २७ पत्राणि, पत्रे १२ पंक्तयः पंक्तौ २४ अक्षराणि प्रायः, कार्णाटी लिपिः, समग्रा, प्रायश्शुद्धा तथा चोत्तमा स्थितिः ।

अपरा मातृका ताळपत्रात्मिका श्री फलिमारुमठाधीशानां श्री श्री विद्यामान्यतीर्थश्रीचरणानामनुकम्पाशीर्वादेन विद्यावाचस्पतिबिरुदमण्डितानां श्रीमतां बन्नंजे गोविन्दाचार्याणां सौहार्दपूर्णेन साहाय्येन च श्री फलिमारु-मठे अन्वेषिता । तत्रत्यमातृकायाः विशकलितपत्रसंयोजनप्रयाससमुद्वहद्भ्यां

आवाभ्यां पत्रमेकं नैवोपलब्धम् । अथापि लब्धेषु मातृकापत्रेषु अत्यन्तं शुद्धपाठ एव पठितः । सा मातृका तुळुलिप्यात्मिका, यां लिपिं बहवः 'तिगळारी' इति कथयन्ति । तन्मातृकापत्रपठने तथा श्रीरघुवर्यतीर्थानां परिचये च श्रीमद्भिः बन्नंजे गोविन्दाचार्यैः महत्साहाय्यं प्रदत्तम्, प्रमुखाः अंशाश्च प्रेषिताः । एतदर्थं तेभ्योऽहं विशेषेण कृतज्ञतां सूचयामि ।

रघुनाथविजयाख्यस्य ग्रन्थस्य सम्पादनकर्मणि फलिमारुमठस्थग्रन्था-द्विशेषेण प्रयोजनं सम्पादयेयमिति मत्वा प्रथमं फलिमारुमठ एव श्री श्रीविद्या-मान्य श्रीपादवर्याणां सन्दर्शनं लब्धवान् । श्रीचरणैः परमं सन्तोषं प्रकटी-कृत्य ग्रन्थस्यास्य प्रकटने अनुग्रहः कृतो मयि । तथा चैतदर्थं फलिमारु-मठीयग्रन्थभाण्डारसन्दर्शनार्थम् अनुज्ञापि प्रदत्ता । कानिचित्पद्यानि च पूर्वलिखितपुस्तकात् श्रुतानि । तत्र उपयुक्ताः सूचना अपि प्रदत्ताः । अतोऽहं नतोऽस्मि नितान्तं कृपापारावाराणां, विद्यासमुद्राणां यतिवराणां श्रीचरणयोः ।

प्राच्यविद्यासंशोधनालयस्य निर्देशकैः विद्वान् डा० एच्. पि. मलेदेवरु महाशयैः एतद्ग्रन्थसम्पादनावसरे समुचितस्थलेषु समभिलषितानुकूल्यकल्पनेन महानुपकारः कृतः । तेषामुपकारं स्मारं स्मारं तेभ्यः, तथा चैतत्संस्थाया उपनिर्देशकेभ्यः न्यायवेदान्तविद्वान् आर. जि. माळगि, एं.ए. इत्येभ्यश्च कृतज्ञतां सूचयामि ।

## सहृदयेषु निवेदनम्

अयि मान्याः, न खल्वेतद्विस्मर्तव्यं यदयं ग्रन्थः श्रीरामायणकथा-कीर्तनरूपतया निबद्धोऽपि छन्दःशास्त्राधारं विशेषेण सम्प्राप्य शोभत इति । अत एवास्य सम्पादनकर्मणि छन्दश्शास्त्राभ्यासिनां बालानां च विशेषोपकाराय सर्वेषामपि छन्दसां लक्षणानि दत्तानि । स्थलद्वये कोष्टकं च प्रदत्तम् । अनेकेषु स्थलेषु श्रीमदाचार्यहृदयगतमेव विषयमुद्घाटयितुं प्रतिपादयितुं वा

समुद्युक्तानां श्रीचरणानां पदपंक्तिविवेचनं च यथामति तत्त्वाविरोधेन कर्तुं प्रयतितमस्ति । श्रीमदाचार्याणां, श्रीचरणानां च तुलनासरण्यपतितपांडित्यस्य प्रकाशने मादृशानां तत्र हस्तक्षेपः हास्यप्रदो भवेत् । तथापि ममेदं कर्तव्यमिति मनीषया कृतं बालचरितं दृष्ट्वा भूयो मम बुद्धिवैशद्यार्थं कृपालवः सहृदयाः यदि कृपालवं मयि पातयेयुस्तर्हि आत्मानं कृतार्थं मन्ये ।

अस्मिन्प्रबन्धे सारभूतार्थप्रतिपादकानि पुनः पुनश्श्रवणार्हाणि सुभाषितानि नात्यधिकानि सन्ति । तेषां पट्टिका पृथक्तया ग्रन्थान्ते कृता । तया च प्रयोजनं भवेदिति भावयामि ।

अनसूयवो महान्तो दयां वितन्वन्तु सततमस्मासु ॥ र.वि.

इति सज्जनानुचरः

**एच्. शङ्करगणपति फाटक्**

[1]श्रीरघुवर्यतीर्थविरचितं

# *रघुनाथविजयम्

—आर्याप्रकरणम्—

देवतास्तुतिः

**करधृतबाणेष्वासं सीतासौमित्रिशोभिपार्श्वयुगम् ।**
**वरदं वन्दे रामं घननीलं हनुमदासेव्यम् ॥ १ ॥**

---

*रघुनाथविजयाख्योऽयं ग्रन्थः केदारभट्टविरचितवृत्तरत्नाकरस्योदाहरणरूपः । अत्र कविवर्यैः श्रीरघुवर्यतीर्थैः समग्रं रामायणं स्वरचितश्लोकैः सङ्गृहीतं वर्तते ।

पथ्यार्यावृत्तम् । आर्यासामान्यलक्षणं यथा –

लक्ष्मैतत्सप्त गणाः गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः ।
षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः ।।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥

आर्याप्रथमद्वितीयचरणनियमाः—चतुर्मात्रकाः सप्त गणाः । अन्ते गुरुः । न विषमगणेषु जगणः । षष्ठः जगणो नगणो वा । षष्ठो यदि नगणः चतुर्लघुरूपो वा तदा द्वितीयलघोः पूर्वं प्रथमलघौ वा यतिः पदसमाप्तिश्च । यदि सप्तमः चतुर्लघुरूपस्तदा तस्य प्रथमलघोः पूर्वं षष्ठस्यान्ते यतिः ।

तृतीयचतुर्थचरणनियमाः—अत्र यदि पञ्चमो गणः चतुर्लघुरूपस्तदा प्रथमलघोः पूर्वं चतुर्थगणान्ते यतिः । षष्ठो गणः एकलघुः ।

---

[1]श्री शुभमस्तु । नरसिंहाय नमः (क) स्वस्ति । निर्विघ्नमस्तु । ओम् (फ)

**आचार्यवन्दनम्**

***देवेन्द्रसमीड्य[1]पदाम्बुजं श्रुतिशिरोऽम्बुजातहरिदश्वम् ।**
**सल्लोकाम्बुधिरजनीशं मध्वमुनिं सततमीडे ॥ २ ॥**

**कमलापतेः सुतत्त्वं प्रदर्शितं येन सम्यगुपदिष्टम् ।**
**‡भगवत्पदैस्तमीडे जयाह्वयं योगिकुलतिलकम् ॥ ३ ॥**

---

पथ्यार्यालक्षणं यथा—

त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्याः प्रकीर्तितं नागराजेन (छन्दोविद्भिः समाख्यातम्) ॥

पथ्या—प्रथमतृतीयचरणयोः चतुर्मात्रात्मके गणत्रये पादान्तः ।

मात्राक्रमः—१२+, १६, गुरुः = १८ = ३०
१२ + १३, गुरुः, = १५ = २७ ॥ १ ॥

*मध्वमुनिः देवेन्द्रादपि पूजामापेति मध्वविजये अवतारनिरूपणे दृश्यते ।

विपुलार्यावृत्तम् । तल्लक्षणं यथा–

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥

यत्र यतिः गणत्रयं आदिमं अतीत्य भवति सा विपुलार्या ॥ २ ॥

‡भगवत्पदैर्मध्वाचार्यैः उपदिष्टं विष्णुतत्त्वं, जयतीर्थैः श्रीमन्न्याय सुधारचनेन विशेषतः स्पष्टीकृतमिति अत्र तान् योगिवरान् स्तौति यतिवरः ।

चपलार्यावृत्तम् । तल्लक्षणं यथा –

उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ।
चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥

---

1 पादा (फ)

*सुगिरावभासितो यः स संपदा हीन इत्यपयशोऽस्तम् ।
मुनिना येन भजामो व्यासाख्यं योगिराजं तम् ॥ ४ ॥
सहयास्यपूर्णकरुणं तपोबुधत्वादिसुगुणसंयुक्तम् ।
शुभबुद्धये भजेऽहं सदा मुनिं वादिराजाख्यम् ॥ ५ ॥

---

चरणद्वयेऽपि द्वितीयचतुर्थगणौ जगणौ भवतः। तयोश्च गुर्वक्षरमध्य-वर्तित्वं स्यात् । ॥ ३ ॥

*श्री व्यासतीर्थाः विजयनगरप्रशासितुः पण्डितवरेण्यस्य कृष्णदेव-रायस्यापत्सूचकत्वेन प्राप्तं कुहूयोगं, तद्योगावधिककाले स्वयं सिंहासनमारुह्य न्यवारयन् इति स्वयं पण्डितस्य राज्ञः, योगिराजस्य व्यासयतेश्च विशेषण-गतंसुगिरावभासित्वम् । अस्मात् श्लोकात् एतदूहितुं शक्यते ।

मुखचपलावृत्तम् । तल्लक्षणं यथा—

आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।
शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥

पूर्वार्द्धे चपलार्यावत् उत्तरार्धे च आर्यासामान्यवत् यत्र सा मुख-चपला । आर्यासामान्यता च मुखचपलाया, उत्तरार्धे पथ्यायाः विपुलायाः वा निवेशनेन भवति । अत्रोदाहरणे उत्तरार्धे पथ्यार्या । ॥ ४ ॥

जघनचपलावृत्तम् । तल्लक्षणं यथा—

प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे च चपलायाः ।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥

अत्र च पूर्वार्धे आर्यासामान्यलक्षणं भवेत् । उत्तरार्धे चपलालक्षण-समन्वयः समावेशेन जघनचपला । आर्यासामान्यं नाम विपुलाया पथ्याया वा । ॥ ५ ॥

—गीतिविभागः—

स्वगुरुवन्दनम्

***सुखमुनिशास्त्रमतुल्यं व्याख्यन्मे यो महातपोभूषः ।**
**वन्दे तं यतितिलकं रघूत्तमाख्यायुतं दयावार्धिम् ॥ ६ ॥**

**यत्पादसंश्रयान्मे विनातियत्नेन बुधताऽभूत् ।**
**तं रामभद्रनाम्ना युतं भजेऽहं [1]गुरुं प्राज्ञम् ॥ ७ ॥**

---

*आनन्दतीर्थभगवत्पादानामेव सुखमुनिरिति पर्यायनाम ।

गीतिः । आर्यागीतिरित्यर्थः । तल्लक्षणं यथा—

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः ॥

गीतौ उभावपि चरणौ आर्याप्रथमचरणलक्षणान्वितौ भवतः । पूर्वार्द्धोत्तरार्धयोः प्रत्येकं त्रिंशन्मात्राः । ॥ ६ ॥

उपगीतिः । तल्लक्षणं यथा—

आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥

उपगीतौ उभावपि चरणौ आर्यासामान्योत्तरचरणवदभवतः । उभयोः चरणयोः प्रत्येकं सप्तविंशतिमात्राः । ॥ ७ ॥

---

[1]गुरुप्राज्ञम् (क)

महत्प्रार्थना

*सम्पूर्णबुद्धिभाजो गुणमात्रग्रहणसंशीलाः ।
अनसूयवो महान्तो दया वितन्वन्तु सततमस्मासु ॥ ८ ॥

काव्यप्रतिज्ञा

श्रीरामकृष्णतुरगमुखामितप्रज्ञगुरुकृपापीयूषम् ।
पीत्वोद्धतो विहर्तुं यते सुवृत्ताम्बुधावचातुर्योऽपि ॥ ९ ॥

---

उद्गीतिः ।   तल्लक्षणं यथा—

आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः ।
सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता ॥

आर्यायाश्चरणद्वयं यत्र व्यत्यस्तरचितं भवति सोद्गीतिः । अस्याः प्रथमचरणे द्वादश, द्वितीये पञ्चदश, तृतीये द्वादश, चतुर्थे च अष्टादश मात्राः स्युः ।

*सम्पूर्णबुद्धिभाज इति विशेषणदानेन अल्पविद्यानाम् एतत्काव्यगुणदोषनिर्णये साहसं मास्त्वित्यर्थः । तथा च काव्यनिर्मितौ विदुषां, गुणग्राहिणां, अनसूयावतां च महतां कृपाया आवश्यकता स्यादेव, अन्यथा काव्यं हृद्यं न भवेदिति रूपान्तरेण गुरुवन्दनमेव कृतमत्र कविना । सम्पूर्णबुद्धिभागिति पूर्णबोधगुरोरपि पर्यायनाम भवति ।    ॥ ८ ॥

आर्यागीतिः ।   तल्लक्षणं यथा—

आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।
इतरत्तद्वन्निखिलं भवति यदीयमुदितेयमार्यागीतिः ॥

—वैतालीयविभागः—

**विनयोक्तिः**

***रघुनाथचरित्रवर्णनं सुशकं नो सुरसश्चयस्य च ।**
**अपि तत्र यते शिशुर्यथा शशिबिम्बाहरणे प्रवर्तते ।। १० ।।**

---

आर्यायाः प्रथमार्धं एकेनाधिकेन गुरुणा युक्तं सत्, यत्र पादद्वय-मारच्यते सा आर्यगीतिः । एकैकस्मिन्नपि चरणे आर्यायाः पूर्वपादगत-त्रिंशन्मात्राः द्वे चाधिके मात्रेऽन्त, इति प्रत्येकं द्वात्रिंशन्मात्राः ।

'यते' इत्यनेन आत्मगतो विनयः प्रख्यापितो भवति । ॥ ९ ॥

*'चरितं रघुनाथस्य शतकोटिप्रविस्तरम्' इत्याद्यभियुक्तोक्त्या राघवचरितवर्णनं देवानामपि दुःशकमेव किमुत मर्त्यानाम् । तर्हि वर्णनाशक्यं तत् त्याज्यमेव किमिति प्रश्नं समाधत्ते । यतः 'एकैकमक्षरं पुंसां महापातकनाशनम्' इति महापापविनाशहेतुः रामचरितं अतः तद्वर्ण्यमेव । तर्हि मादृशेन लब्धगुरुकृपेणापि अन्यत्किमपि सामन्यचरितं वर्ण्येत । राघवचरितवर्णने कुतो वा शक्तिः स्यादित्याशङ्क्य आत्मनः शिशुतुल्यतां राघवचरितवर्णनस्य चन्द्रबिम्बाहरणवदशक्यतां च प्रतिपाद्य कथमपि भवतु कर्तव्यं कार्यमेवेति धैर्येण तत्कार्यसिषाधयिषां प्रकटीकरोत्य-नेन । [1]शिशुना सता हनुमता सूर्यबिम्बाहरणार्थमेव यत्नः कृतः । तेन च सः अवध्यत्वाबद्धत्वकामरूपधरत्वादिगुणगणान् समासादितवान् । अतः जानन्नजानन्वापि रामकथावर्णनेन सत्फलं लभ्यत एवेति तद्वर्ण्यमेवेति तात्पर्यम् । अनेनोपमानेन राधवचरितवर्णन स्य दुःसाध्यत्वं सङ्ग्रह-रूपस्यास्य ग्राह्यत्वं च सूचितं भवति ।

---

1 पद्मपुराणम्, पातालखण्डः ११४ अध्यायः ।

काव्यनिर्माणकारणनिरूपणम्

**अपि राघव[1]सत्कथैकवर्णो निखिलाघौघविदारणे[2] पटुश्च ।**
***वचनान्युपजीव्य सन्मुनीनां लवमस्या मतिशुद्धये ब्रवीमि**
**॥ ११ ॥**

---

वैतालीयं छन्दः । तल्लक्षणं यथा—

षट् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समात्र पराश्रिता कला वैतालियेऽन्ते रलौ गुरुः ॥

प्रथमतृतीयचरणयोः तथा द्वितीयचतुर्थचरणयोः अनुक्रमेणादौ षट् तथा अष्टौ मात्राः स्युः । अनन्तरं उभयत्रापि क्रमेण एको रगणः एको लघुः एको गुरुश्च स्यात् । समचरणयोः अष्टावपि लघुमात्रा एव न स्युः । विषमयोरेष नियमो नास्ति । द्वितीयतृतीययोः चतुर्थपञ्चमयोः, षष्ठसप्तमयोश्च एकेनैव गुरुणोपादानं न कार्यम् । समाः कलाः पराश्रिता न भवेयुरित्यभिप्रायः ॥

अत्र एवं मात्राक्रमः

प्रथमपादे तृतीयपादे च—

६ल + र + ल + गु = १४ × २ = १८ मात्राः

द्वितीये चतुर्थे च पादे—

८ ल + र + ल + गु = १६ × २ = ३२ मात्राः ॥१०॥

*वर्ण्ये रामकथानके उपजीवनं किमिति प्रश्ने सन्मुनिवचनानीति गाधत्ते। अत्र रामकथायां आदिकविर्वाल्मीकिः तथा तत्र तत्र सन्दिग्धेष्वं

---

1 सत्कथैक(फ) 2 पटुर्यत(क)

काव्यारम्भः—बालकाण्डः

कमलेशो भूभरहृत्यै त्रेतायां सुरवृन्दनुतः सन् ।
*उद्भवनेच्छुर्मरुदादीनवदद्भूमावुद्भवतेति ।। १२ ।।

---

शेषु श्रीमदानन्दतीर्थमुनिः अन्ये च प्रमाणमिति तद्वचनोपजीवनेन, स्वमतिशुद्धिं विधातुं महतीं कथां संक्षिप्ताकारेण आरचयामीति कविः आत्मनो नम्रभावं निरहङ्कारतां च प्रकटयति । येन केनापि रचितस्य रामकथानकस्य पठनेन श्रवणेन वा निखिलपापप्रवाहभञ्जनं अविदुषोऽपि अयत्नेनैव भवति । परन्तु विशेषतः श्रुत्वा रूपान्तरतया तस्य निर्माणे तु पठननिर्माणरूपकार्यद्वयस्य सत्वात् एतादृशपरिश्रमेण निखिलपापापनोदनं, मतिशुद्धिश्चेति फलद्वयं सुसाध्यमिति कविरभिप्रैति ।

अथ यदि 'मतिशुद्धये सन्मुनीनां वचनान्युपजीव्य' इति अन्वयः क्रियते तदा, सन्मुनिवचनाधारवता मया स्वकपोलकल्पितं मुनिमतविरुद्धं वा किमपि नैवोच्यत इति, सर्वथा सन्मुनिसंमता मम काव्यविषयिणी उक्तिः अतोऽपिसा ग्राह्येति च युक्त्या प्रतिपादितं भवति ।

अत्र औपच्छन्दसिकम् । तल्लक्षणं यथा—

पर्यन्ते र्यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम् ।।

विषमसमपादयोः षण्णां अष्टानां च मात्राणामन्ते रगणयगणौ यदा भवेतां तदा औपच्छन्दसिकं नाम वृत्तम् ।

अयं क्रमः—६ मात्रः + रगणः + यगणः । ८ मात्राः + रगणः + यगणः । एवं उत्तरार्धेऽपि । शेषं वैतालीयवत् । ।। ११ ।।

*आत्मनः अवतारकाले अन्यदेवतापेक्षया मरुद्देवतैव विशेषेण साहाय्यकमाचरिष्यतीति भाव्यवतारविषयमालोच्यैव मरुदादिदेवान् भूमौ

**हनूमदाद्याह्वया मरुत्प्रधानदेवा वानरादिषु ।**
**ततोऽखिला भूतलेऽभवन् रमेश[1]सेवासक्तधीयुताः ।। १३ ।।**

---

उद्भवतेति आदिष्टवान् । रामावतारे च मरुत्पुत्रस्य हनुमत एव साहाय्यं विशेषतः अङ्गीकृतं भगवता इति मरुदादिपदस्यात्र औचित्यम् ।

वाल्मीकिरामायणे तु भगवदादेशदाने न कोऽपि देवः पुरस्कृतः । देवतासमूहमुद्दिश्यैव तत्र भगवता ब्रह्मणा आज्ञापितं भूमौ उद्भवनार्थं इति विशेषः ।

[2]आपातलिका छन्दः । तल्लक्षणं यथा—

आपातलिका कथितेयं भाद्गुरुकावथ पूर्ववदन्यत् ।

षण्णां अष्टानां च मात्राणां अन्ते भगण एकः, द्वौ गुरू न यत्र स्यातां सा आपातलिका । वैतालीयमेवेदं वृत्तं भगुरुव्यत्यासेन । ॥ १२ ॥

दक्षिणान्तिका छन्दः । तल्लक्षणं यथा—

तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः ।

चतुर्ष्वपि पादेषु द्वितीया मात्रा तृतीयमात्रया युक्ता चेत् तदा एतच्छन्दो भवति । 'न समात्र पराश्रिता कला' इति पूर्वोक्तनियमस्यापवादः । अत्र समा कला पराश्रिता भवति । परन्तु केवलं द्वितीय मात्रैव परान्वितेति ज्ञेयम् । शेषं वैतालीयवत् । लो नाम मात्रेत्यर्थः । चतुर्ष्वपि चरणेषु द्वितीयो गुरुवर्ण इति तात्पर्यम् । ॥ १३ ॥

---

1 सेवासक्ताः धीयताः (क) 2 आर्यंतालिका (फ)

**अथो हरी राम इत्यभूत्कौसल्यायां* तन्तुजाद्रवेः ।**
**दशादिरथनामकान्नृपादैन्द्र्यां दिशि पीयूषरश्मिवत्**
**॥ १४ ॥**

**†अथ लक्ष्मणनामकः सुतो जातवान् नृपतितोऽस्य चानुजः ।**
**अपरत्र कलत्र ऊर्जितो भूप एभिरखिलार्थभागिव ॥ १५ ॥**

---

*तन्तुः, सन्ततिः । रवेस्तन्तुजाद्दशादिरथनामकान्नृपादित्यन्वयः । रविवंशसम्भूताद्दशरथादित्यर्थः ।

उदीच्यवृत्तिः । तल्लक्षणं यथा—

उदीच्यवृत्तिर्द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः ।

विषमचरणयोः द्वितीयमात्रा तृतीयमात्रया युक्ता भवेत् । द्वितीयो गुरुवर्णो भवति प्रथमतृतीयचरणयोः । शेषं वैतालीयवत् । ॥ १४ ॥

†वाल्मीकिरामायणे राममनु भरतः जज्ञे, तदनन्तरं सौमित्री लक्ष्मण-शत्रुघ्नौ जज्ञाते इति क्रमो दृश्यते । अत्र तु रामादनन्तरं लक्ष्मणो जातः इत्युक्त्वा भरतशत्रुघ्नयोरुत्पत्तिविषयः अस्पष्ट इव भाति । मातृकयोरपि 'नृपतितोऽस्य चानुजः' इति एकवचनान्तः पाठो दृश्यते । स च लक्ष्मणपरतयाप्यन्वेतुं शक्यते । तर्हि उत्तरार्धे 'एभिः भूपः अखिलार्थभागिव' इति बहुवचनस्य सङ्गतिः कथमिति प्रश्नः सन्दिग्ध एव तिष्ठेत् । अतः त्रयाणामपि उत्पत्तिर्यथाकथञ्चिदत्र वक्तव्यैव । एतदर्थं अस्य श्लोकस्य अर्थः एवं क्रियते ।

'अपरत्र कलत्र' इत्यस्य कलत्रद्वय इति अर्थं स्वीकृत्य लक्ष्मण-नामकः सुमित्रायां जातवान्, तस्यानुजः शत्रुघ्नश्च सुमित्रायां जातवान् इति द्वयोः सुमित्रासुतयोरुत्पत्तिर्वाच्या । अनन्तरं कैकेय्यां ऊर्जितः जातवान् । ऊर्जितो भरतः । कथं भरतः ऊर्जितशब्दवाच्यो भवतीति

***प्रमोद आसीन्नृणामिमान्पश्यतां न हि लभामहे तुलाम् ।**
**अमुष्य भविनां परोऽल्पको मौक्त आविशति नो मनो यतः**
**॥ १६ ॥**

---

चेत् तस्य भ्रातृप्रेम, राज्यानासक्त्यादिगुणगणं मनसि निधाय कविना भरतः एतद्विशेषपोन प्रोक्तो भवेदिति सुसङ्गतम् । परन्तु लक्ष्मणोत्पत्तेः प्राक्-भरतस्योत्पत्तिरत्र रामायणादिवद्वक्तुं न शक्यते । लक्ष्मणगतभक्त्यति-शयात्कविः पूर्वं लक्ष्मणजनिं कथयामासेत्यादिना विद्वद्भिः सर्वा अपि समस्याः सयुक्तिकं समाधेयाः ।

प्राच्यवृत्तिः । तल्लक्षणं यथा–

पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ।

द्वितीयचतुर्थचरणयोः पञ्चमी मात्रा पूर्वेण लघुना यदि युज्यते तदा प्राच्यवृत्तिः । चतुर्थपञ्चममात्रयोः एकेन गुरुणा उपादानं कार्यम् । 'न समात्र पराश्रिता कला' इत्यस्यापवादः । शेषं वैतालीयवत् ।
॥ १५ ॥

*राजपुत्रान् पश्यतां जनानां योऽसौ प्रमोद आसीत् तस्य तुला नास्त्येव । यतः भविनां संसारिणां परत्र विद्यमानः मौक्तः, मुक्तेः सम्बन्धः अपि अल्प एव बभूव । राजपुत्रान् दृष्ट्वा सन्तुष्टाः संसारिणः मुक्तावपि न मनश्चक्रिरे । मोक्षे य आनन्दः तदपेक्षयाऽपि एतद्दर्शनज आनन्दः महानासीदिति तात्पर्यम् ।

प्रवृत्तकम् । तल्लक्षणं यथा–

यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तकम् ।

उदीच्यवृत्याः विषमपादौ प्राच्यवृत्याश्च समपादौ यत्र भवतः तत्प्रवृत्तकम् ।

---

2 न तु (क)

**वर्धमानतनवोऽतिसुन्दरा रामचन्द्रमुखसूनवो नवाः ।**
**सत्वरं विततकीर्तिकन्यका ऊहुरुत्तमपराक्रमान्विताः ॥ १७ ॥**

**[1]यशोऽङ्गना तत्र रामगा मनो वशं कस्य नो नयेत् ।**
**यया सुधीरो मुनिर्वशं प्रणीत[2] ऐद्गाधिजो नृपम् ।। १८ ॥**

(इति वैतालीयविभागः)

---

प्रथमतृतीयपादयोः द्वितीयतृतीयमात्रासंयोगः । द्वितीयचतुर्थपादयोः चतुर्थपञ्चममात्रासंयोगः । ओजो नाम विषम इत्यर्थः । शेषं वैतालीयसामान्यवत् । ॥ १६ ॥

अपरान्तिका । तल्लक्षणं यथा—

अस्य युग्मरचिताऽपरान्तिका ।

अस्यैव प्रवृत्तकस्य समपादैः सम्पूर्णा अपरान्तिका । पञ्चमी मात्रा चतुर्थमात्रया युक्ता सर्वपादेष्वपि कार्या । शेषं वैतालीयसामान्यवत् । इदं मात्रासमवृत्तम् । ॥ १७ ॥

[1]श्रीरामं स्ववशं नेतुं या यशोरुपिणी अङ्गना ऐच्छत् सा तदवरं कं वा स्ववशं न नयेत् । अत एव सुधीरोऽपि गाधिजो विश्वामित्रः तद्वशगः सन् दशरथनृपमगात् ।

विश्वामित्रस्य गाधिपुत्रत्वं यथा—

भार्गवेषु मुख्यः ऋचीक आसीत् । तेन च बाल्यं वेद-तपोऽनुष्ठानादिभिः व्यतीतम् । जातु सः तीर्थयात्राप्रसङ्गेन 'विश्वमित्री' नद्यास्तीरमागतः । तत्र कान्यकुब्जेशस्य गाधेः पुत्रीं स्नान्तीं दृष्ट्वा, मोहितस्तां पत्नीत्वेनैच्छत् । हैहयविरोधिना अनेन कान्यकुब्जेशस्य सौहार्दं

---

2 एहाधिजो (क)

समासादितुं चिन्तितमासीत् । गाधेः इच्छानुसारं ऋचीकेन तस्मै सहस्रं श्यामकर्णयुता अश्वा अपि प्रदत्ताः । ऋचीकः गाधिपुत्रीं सत्यवतीं उपयेमे । जातु तेन तपोऽर्थं आश्रमं त्यक्त्वा गच्छता पत्न्यै वरो दत्तः । सा च आत्मनः मातुश्च पुत्रौ भूयास्तामित्ययाचत । सन्तुष्टेन ऋचीकेन ब्राह्मणोत्पत्त्यर्थं क्षत्रियोत्पत्त्यर्थं च द्वे चरुस्थाली प्रदत्ते । तथा ऋत्वनन्तरं भार्यया अश्वत्थस्य श्वश्र्वा च वटवृक्षस्य सहस्रं प्रदक्षिणाः कार्याः इत्यपि निर्दिष्टम् ।

बहोः कालादनन्तरं तीर्थयात्राप्रसङ्गेन गाधिः कदाचित् ऋचीकस्याश्रमं ययौ । सत्यवती मात्रपेक्षया आत्मनः चरुं तस्यै ददौ । ऋचीकः सर्वं ज्ञात्वा सत्यवत्यै क्षत्रियापत्यं न भवेत् । अपि तु पौत्रः क्षत्रियो भवेदिति अकथयत् । तदनुसारं तस्याः जमदग्निप्रभृतयः शतं पुत्राः ब्राह्मणस्वभावकाः बभूवुः । पौत्रश्च एकः रेणुकापुत्रः परशुराम इति ख्यातः क्षत्रियकुलकाननदावः समजनि । गाधेस्तु क्षत्रियवीर्ययुक्तः विश्वामित्राख्यः पुत्रः बभूव । तेन पुनस्तपसा ब्राह्मण्यं समासादितम् । इति विश्वामित्रस्य गाधिजत्वम् ।

**महाभारतं—वनपर्व, अध्यायः ११५**
**अनुशासन पर्व ४९**

एवं विष्णुस्कन्दवायुब्रह्मपुराणेषु हरिवंशे च एषा कथा प्रसिद्धा ।

चारुहासिनी । तल्लक्षणं यथा—

अयुग्भवा चारुहासिनी ।

अस्यैव प्रवृत्तकस्य विषमपादैः निर्मिता चारुहासिनी । चतुर्ष्वपि चरणेषु प्रत्येकं चतुर्दश मात्राः । द्वितीया मात्रा तृतीयया सम्बद्धा स्यात् । इदमपि मात्रासमवृत्तम् ।                                   ॥ १८ ॥

अनुष्टुप् विभागः—वक्रप्रकरणम्

**आगतं स्वागताद्यै[1]स्तं राजा सम्पूज्य भक्त्याऽथ ।**
**किमुद्दिश्य मुनेऽत्र त्वमागतोऽसीति पप्रच्छ ।। १९ ।।**

---

वक्रम् ।– तल्लक्षणं यथा–

वक्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ।

'अनुष्टुप्' नामकाष्टाक्षरपादात्मकवर्णसमवृत्तजातौ, प्रथमवर्णात्परं नगणसगणौ न भवेताम् । अब्धेः परं, यगणः कार्यः । अब्धिपदं चतुः-संख्यावाचकम् । समपादयोः प्रथमाक्षरादूर्ध्वं रगणो न कार्यः इति सम्प्रदायापतितम् ।

अनुष्टुभो वर्णवृत्तस्य वर्णवृत्तविभाग एव निवेशनं समुचितं न मात्रावृत्त-मध्ये । अथपि वक्रादीनां अनुष्टुप्प्रकारणां अन्यवर्णवृत्तानामिव नियतो वर्णक्रमो नास्ति । अत्र क्वचिद्गुरुलघुनियमोऽप्यपेक्षत इति मात्रिकासम-वृत्तत्वादिहास्य निरूपणं नाप्रासङ्गिकम् ।

**गणलक्षणम्**

सर्वगुर्मो मुखान्तर्लौ यरावन्तगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥

| मगणः | यगणः | रगणः | सगणः | तगणः | जगणः | भगणः | नगणः |
|---|---|---|---|---|---|---|---|
| SSS | ISS | SIS | IIS | SSI | ISI | SII | III |
| सर्वगुरुः | आदि-लघुः | मध्यलघुः | अन्तगुरुः | अन्तलघुः | मध्य-गुरुः | आदिगुरुः | सर्व-लघुः |

---

1 स्तु (क)

**इति पृष्टो मुनिः स्माह तव पुत्रस्य धीमतः ।**
**रामस्यास्यनिशेशस्य दर्शनार्थमिहागमम्  ॥ २० ॥**

***सर्वानिष्टविरामदो रामोऽयं सर्वलोकानाम् ।**
**तदेनं मखवैरिणो हन्तुं सम्प्रेषयोर्वीश ॥ २१ ॥**

---

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥
' छन्दोमञ्जरी '  ॥ १९ ॥

पथ्यावक्रम् ।  तल्लक्षणं यथा–
युजोर्जेन सरिद्भर्तुः पथ्यावक्रं प्रकीर्तितम् ।

युजोः युग्मयोः, द्वितीयचतुर्थचरणयोः चतुर्थाक्षरादूर्ध्वं जगणे सति पथ्यावक्रम् । सरिद्भर्ता, समुद्रः । शब्दोऽयं चतुःसंज्ञावाची । शेषं वक्रसामान्यवत् ।  ॥ २० ॥

*यतोऽयं सर्वालोकानां सर्वानिष्टविरामदः अत एव सर्वलोकान्तः-पातिनोऽपि न ममैव प्रयोजनाय केवलं, अपि तु मखवैरिणो राक्षसान् निहन्तुं प्रेषयेत्यर्थः । मत्कर्तृको यज्ञः लोकहितसाधक इति सूच्यते ।

विपरीतपथ्यावक्रम् ।  तल्लक्षणं यथा ।
ओजयोर्जेन वारिधेस्तदेव विपरीतादि ।

विषमचरणयोः चतुर्थाक्षरादूर्ध्वं जगणे सति पथ्यावक्रमेव विपरीत-पथ्या भवति । शेषं सर्वं वक्रसामान्यवत् ।  ॥ २१ ॥

**इत्युक्तोऽयं तनयतो बालात्कस्य भवेत्सिद्धिः ।**
**सर्वज्ञोऽसि स्म मुनिप न शक्यमिदमित्याह ।। २२ ।।**

**इत्युक्तो मुनिरूचे तं सत्यमुक्तं त्वयापि तु ।**
**तद्धितान्त[1]मिदं बालपदं, कस्येति काकुतिः ।। २३ ।।**

---

चपला । तल्लक्षणं यथा–

चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ।

विषमपादयोः चतुर्थाक्षरात्परं यदा नगणः भवति तदा चपलावक्त्रम् । समपादयोस्तु यगण एव वक्त्रसामान्यवत् । अयुक्, विषममित्यर्थः ॥ २२ ॥

बालपदमिदं तद्धिताण् प्रत्ययान्तं सत् तस्यार्थः बलस्येदमिति । तस्येदमित्यण् । बलस्येदं बालं बलयुतं कर्म, तस्मात् बालाद्बलवता कर्मणा इति ज्ञेयम् ।

कस्येति ' न किं शब्दस्य षष्ठी । अपि तु कस्य विष्णोरित्यर्थे कशब्दषष्ठी । तथा च सहस्रनामावल्यां, ' एको नैकः सवः कः किं ' इति । तथा च बलवता कर्मणा कस्य, विष्णोः अवतारप्रयोजनसिद्धिर्भवतीति उक्तं भवति । कस्येति पदेन कस्य आकृतिः कथिताऽभवदिति भवत्प्रश्नो न प्रश्नः, अपि तु उत्तरमेव तदिति विश्वामित्रः भङ्ग्यन्तरेण समर्थयति ।

युग्मविपुला । तल्लक्षणं यथा–

यस्या लः सप्तमो युग्मे, सा युग्मविपुला मता ।

यस्यां पथ्यायां समचरणयोः सप्तमो वर्णः लघुर्भवति सा युग्मविपुला । इदं पिङ्गलमतम् । अस्मिन् काव्ये कविना सैतवमतेन सर्वपादेष्वपि सप्तमाक्षरलघुलक्षिता युग्मविपुलाऽपि स्वीकृताऽस्ति । ॥ २३ ॥

---

1 पदं (क)

**इदं न शक्यमिति च शक्तियोग्यान्यतापरम् ।**
**तथाप्यशक्यमपरैरेतत्कर्तुं क्षितीश्वर ।। २४ ।।**

**विपुलाभेदनिरूपणम्**

**इत्थं प्रोक्तो भूमिपतिः शापाद्भीतः खिन्नमनाः ।**
**ओमित्यूचे [1]श्रीरघुपः पश्चाद्यातः सानुजनिः ।। २५ ।।**

---

पूर्वोक्तश्लोके 'इदं न शक्यमिति यदाह दशरथः तस्योत्तरं विश्वामित्रो दिशति। हे क्षितीश्वर ! शक्तेर्योग्यं शक्तियोग्यं, शक्तियोग्यान्यतापरं शक्त्ययोग्यं अशक्यम्। अस्मिन्नर्थे भवता यत् 'इदं न शक्यं' इत्युक्तं एतत् शक्तियोग्यान्यतापरं अपि अपरैः, एतद्बालकव्यतिरिक्तैः तथा कर्तुमशक्यत्वात् तत्साध्यमेवेदमिति तर्कयामि । अयं विश्वामित्राभिप्रायः ।

सप्तमलघुसर्वपादा युग्मविपुला । तल्लक्षणं यथा—

'सैतवस्याखिलेष्वपि' सैतवाचार्यः चतुर्ष्वपि चरणेषु सप्तमाक्षरलाघवं अभिप्रैति । वृत्तरत्नाकरसेतौ अस्या लक्षणं यथा—

स्यात्सप्तमो यत्र लघुः चतुर्षु चरणेषु सा ।
विपुलोक्ता सुमतिभिः सैतवस्य मतेन हि ॥

शेषं सर्वं वक्त्रसामान्यवत् ।                                                    ॥ २४ ॥

भविपुला । तल्लक्षणं यथा—

भेनाब्धितो भाद्विपुला ।

चतुर्थाक्षरात्परं भगणस्य निवेशनेन भविपुला भवति । अब्धिः, शब्दः चतुःसंख्यावाची ।                                                    ॥ २५ ॥

---

1 रघुपः (क)

**सलक्ष्मणः श्रीरमेशो धृत्वा गच्छंश्चापबाणौ ।**
**तस्मान्मुनेरस्त्रमाप्य ब्रह्मेशाद्यैः संस्तुतोऽभूत् ।। २६ ।।**

**ततो रामो विपिनगां ताटकाख्यां निशिचरीम् ।**
**हत्वा ययौ मुनिपदं सिद्धाश्रमाह्वययुतम् ।। २७ ।।**

**सुबाहुं हत्वावीन्मखं परांश्चाद्वितीयस्ततः ।**
**ख्यातोऽभवद्भूमावयं नुतोऽप्यास सद्योगिना ।। २८ ।।**

इति वक्रप्रकरणम्

---

अस्त्रसङ्घमिति ज्ञेयम् । विश्वामित्रो बहून्यस्त्राणि हि रामाय ददौ ।

रविपुला । तल्लक्षणं यथा—

इत्यमन्या रश्चतुर्थात् ।

चतुर्थाक्षरात्परं यदि रगणः निवेश्यते तदा रविपुलावक्त्रम् ।। २६ ।।

वाल्मीकिरामायणे ताटकावधादनन्तरं विश्वामित्रः रामाय अस्त्रग्राम-मुपदिदेश इति वर्तते । अत्र तु अस्त्रग्रहणानन्तरं ताटकावध इति व्यत्यासः ।

नविपुला । तल्लक्षणं यथा—

नोऽम्बुधेश्चेन्नविपुला ।

चतुर्थाक्षरात्परं यदि नगणस्तदा नविपुलावक्त्रम् । ।। २७ ।।

रक्षणार्थकावधातोः लुङि अवीदिति ।

सद्योगी विश्वामित्रः तेनेत्यर्थः ।

तविपुला । तल्लक्षणं यथा—

तोऽब्धेस्तत्पूर्वान्या भवेत् ।

चतुर्थाक्षरात्परं तगणे सति तविपुला वृत्तम् । ।। २८ ।।

—मात्रासमकविभागः—

**तदनु मुनिवरनिजसहजनिसहित**
**इतमहजनकपुरमगमदज इह ।**
**विदितजनकमत उरुधनुरवधुत–**
**खलततिरयमतिसुखमयतनुरपि ॥ २९ ॥**

**सुन्दरनिजाकृतितो मोदयन्**
**जनताः, प्रविश्य नगरं राज्ञा ।**
**अभिगतिपूर्वं समर्चितोऽस्मा**
**वृषिणार्चितेन सहोपविष्टः ॥ ३० ॥**

---

अचलधृतिः । तल्लक्षणं यथा–

द्विकगुणितवसुलघुरचलधृतिरिति ।

द्विकगुणिता वसवः षोडश । तत्परिमितैः लघुभिर्युता अचलधृतिः । एकैकस्मिन् चरणे षोडशलघवः स्युः । पिङ्गलाचार्यमते इयं गीत्यार्या ।

विदितजनकमते अयं रामः उरुधनुषा अवधुतखलसन्तान इति तात्पर्यम् । ॥ २९ ॥

अभिगतिः, आगतं रामं प्रत्युत्थानादिभिः अभिगमनरूपा क्रिया । महतां स्वागतक्रम एषः ।

मात्रासमकम् । तल्लक्षणं यथा–

मात्रासमकं नवमोल्गान्तम् ।

षोडशमात्रापादच्छन्दसि नवमी मात्रा लघुर्भवेत् । अन्ते च गुरुवर्णः स्यात् । इदं मात्रासमकम् । ॥ ३० ॥

**अथ बहुनृपेन्द्ररैनिकषाश्मप्रतिमं स शैवमागृह्य धनुः ।**
**चक्रे गुणाढ्यमपि बभञ्ज हि प्रभुजनकृपाऽनृजुगा न लोके**
**॥ ३१ ॥**

**अथ जनकसुता सुपद्ममालां रघुपतिकमनीयकण्ठमध्ये ।**
**सरसहसितपूर्वमाकलय्य प्रततमुदं प्राप लोकजननी ॥ ३२ ॥**

---

बहुनृपेन्द्राणां रायां, सम्पदां निकषोपलतुल्यं धनुरिति । अस्य धनुषो भङ्गो नाम नृपेन्द्रशक्तिसम्पत्परीक्षणमिवेत्यर्थः । शैवं धनुः पूर्वं दक्षयज्ञध्वंसनसमये देवान्नाशयितुमेव शिवेन सकृत् धृतमासीत् । परन्तु भीतैः प्रार्थितो महेशः तन्नोपयुज्य देवरातगृहे स्थापितवान् । देवरातः निमिवंशजः । निमिवंश एव विदेहवंशः । ततश्च जनकगृहे पूर्वजेन देवरातेन शिवदत्तन्यासरूपेण पालितमेतद्धनुः । 'गुणाढ्यमपि' इति धनुःपक्षे मौर्वीयुतमपीत्यर्थः । हीति अर्थान्तरन्यासेन उपपादयति । लोके प्रभुजनानां कृपा कुटिलेषु न भवति खलु । ऋजुः सरलः, अनृजुः कुटिलः वक्रः । यतो धनुर्वक्रं अतः तस्मिन्नपि वक्रगुणयोगात्कृपापात्रत्वं नास्ति ।

विश्लोकः । तल्लक्षणं यथा—

जो न्लावथाम्बुधेर्विश्लोकः ।

चतुर्थ्या मात्रया परं यदा जगणः प्राप्नोति तदा विश्लोकवृत्तम् । अथ वा चतुर्थ्या परं यदि नगणः लघुश्चैकः भवतः, चत्वारो लघव इति यावत् । तदाप्येतदेव वृत्तम् । ॥ ३१ ॥

वानवासिका । तल्लक्षणं यथा—

तद्युगलाद्वानवासिका स्यात् ।

तद्युगलात्, अम्बुधेर्युगलात् अष्टाभ्यः मात्राभ्य इत्यर्थः । ताभ्यः परं यदि जगण एकः, नगणोलघुरेकश्चेति वा भवतः तदा वानवासिका छन्दः ।
॥ ३२ ॥

अथ जनकबोधित निजसुतमहो
दशरथनृप इह समित्र आगात् ।
विधिभवपुरोगनयनोत्सवदं
पाणिग्रहमहमगमद्रघुपः ॥ ३३ ॥

अथ रामः सीतासहितोऽगात्पित्राद्यैः सद्भिभवाढ्यः ।
निजपुरमयनेऽपश्यदरातिप्रख्यमभिन्नं भार्गवरामम् ॥ ३४ ॥

अथ युधमभिलषति तस्मिन्नयं प्रयुध्य जिगाय रामो रामम् ।
लीलैषा हि परदेवतायाः न समस्ति तारतम्यमेतयोः
॥ ३५ ॥

---

चित्र्यम् । 'चित्रा' इति वृत्तरत्नाकरे तल्लक्षणं यथा—

बाणाष्टनवसु यदि लश्चित्रा ।

यदि पञ्चमी-अष्टमी-नवमी च मात्रा लघुर्भवति तदा चित्र्यम् । शेषं समानम् । ॥ ३३ ॥

अरातिप्रख्यं, शत्रुसदृशं न तु स्वभावतः शत्रुम् । 'स्युरुत्तरपदे प्रख्यः प्रकारः प्रतिमो निभः' इति हेमचन्द्रः । अभिन्नं, स्वाभिन्नं । स्वयमिव तस्यापि स्वावताररूपत्वात् । उपचित्रा । तल्लक्षणं यथा—

उपचित्रा नवमे परयुक्ते ।

नवमे मात्रारूपे दशमयुक्ते सति उपचित्रा भवति । नवम्याः दशमी-युतत्वं च तदुभयोरपि एकेनैव गुरुणोपादानाद् भवति । ॥ ३४ ॥

एकस्यैव परमात्मनो रूपद्वयं रामः परशुरामश्च । तर्हि कथं तयोः शक्तौ तारतम्यसद्भाव इत्युक्ते कथयति एतत्तारतम्यवद्दृश्यमानं न वस्तुतः

—द्विखण्डकछन्दःप्रकरणम् —

**अथ रघुपतिरितिविजितभृगुकुलतिलक उरुमुदमवनिप[1]मतनो**
**त्कमलभवपुरहर[2]दिनपतिधनपतिमुखसुरवरनिचयविनुतपदः।**
**सजलजलदसदृशतनुरसमकनकवसनशरधनुरतिलसितः**
**स्वकनगरमविशदमरनिलयविभवमुपगतसहजनिजनकदयितः**
**॥ ३६ ॥**

---

सत्यमपि तु परमात्मकृता लीलैषा इति । स खलु कर्तुमकर्तुमन्यथा कर्तुं च समर्थः । अत्र रामावतारस्य प्राधान्यात् उभयोः सत्यामपि समानशक्तौ दाशरथेर्विजयः भार्गवस्यापजयश्च लीलारचितः ।

पादाकुलकम् । तल्लक्षणं यथा—

यदतीतकृतविविधलक्ष्मयुतैः मात्रासमादिपादैः कलितम् ।
अनियतवृत्तपरिमाणयुक्तं, प्रथितं जगत्सु पादाकुलकम् ॥

पूर्वोक्तमात्रासमकादिपादैः संयुक्तं एकैकस्मिन्नपि पादे नियमितैक-लक्षणहीनं, परं षोडशमात्रासंयुक्तं पादाकुलकमिति प्रसिद्धं भवति । अत्र क्रमेण चतुर्षु चरणेषु मात्रासमक-विश्लोक-वानवासिकाचित्राणां समावेशेन इदं पादाकुलकम् । ॥ ३५ ॥

जनकदयितः जनकस्य प्रीतिपात्रमित्यर्थः ।

शिखा । तल्लक्षणं यथा—

शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम् ।
सगुरुशकलयुगलकमपि सुपरिघटितललितपदनिचिति भवति शिखा ॥

---

1 मकरोत् (क) 2 विट्पति (क)

**पनसमुखविटपिदलविततिसहितजलभरितकनकमयघटघटितं**
**जलशमितरजउपवनपवनहिमजलविकसितसुमपरिमलितम् ।**
**ध्वजगणखचितवसनपरिहृतदिनकरकरममितमह इत अनुपमं**
**मिलितनिजकरधृतशुभतमफलवसुमुदितहृदयसुजनलसितम्**
**॥ ३७ ॥**

**रामोऽथायोध्यायामिन्द्रागाराकारेऽगारे देव्या**
**युक्तो हैमे मञ्चे लग्नां शय्यां फेनाभामारूढः ॥**

**शशविकलसकलकलशिशिरकिरण–**
**निकरपरिहसनरतसुतिलकमुख–**
**सदुपरितनपरिमलघनकुचकल–**
**शलसदुपकरण उरुरतिमतनुत ॥ ३८ ॥**

---

शिखिनः त्रयोऽग्नयः । पूर्वार्धे अष्टाविंशतिलघवः एको गुरुः, उत्तरार्धे च त्रिंशल्लघवः एको गुरुः । एवं पूर्वार्धोत्तरार्धे मिलित्वा एकः खण्डः । द्वितीयखण्डेऽपि एवमेव नियमः । शिखादिषु चरणक्रमो नास्ति । अत एव एते छन्दःप्रकाराः द्विखण्डका इति व्यवह्रियन्ते । ॥ ३६ ॥

खञ्जालम् । तल्लक्षणं यथा–

विनिमयविहितशकलयुगललघुललितपदविततिरचितगणनिचया ।

श्रुतिसुखकृदियमपि जगति जि जशिर उपगतवति सति भवति खजा ॥

शिखाया एव पूर्वार्धोत्तरार्धव्यत्ययेन खञ्जा । अत्र पूर्वार्धे त्रिंशल्लघवः एको गुरुः उत्तरार्धे अष्टाविंशतिलघवः एको गुरुः इत्येवं क्रमेण खण्डरचना । एतादृशखण्डद्वयसमावेशेन खञ्जा भवति । मातृकायां ' खञ्जालं ' इति निर्दिष्टं वर्तते ॥ ॥ ३७ ॥

अनङ्गक्रीडा । तल्लक्षणं यथा–

**मम मनसि लसतु शमलहरसकलसुरभुवनविभवरघुपुंगी**
**लसतु च मदनमदहरणपटुवपुरमितगुणयुगिह रघुपतिः ।**
**लसतु विधिहरमुखसुरनुतपदयुगनिजशुभचयदजनकजा**
**निखिलसुजन इति सततमलषदगमदपि सुखततिमति-**
**रुचिराम् ॥ ३९ ॥**

**इति श्रीरघुवर्यतीर्थ[1]विरचिते वृत्तरत्नाकरोदाहरणे रघुनाथविजये मात्रावृत्तप्रबन्धः प्रथमः ॥**

---

अष्टावर्धे गा द्व्यभ्यस्ता यस्याः साऽनङ्गक्रीडोक्ता ।
दलमपरमपि वसुगुणितसलिलनिधिलघुकविरचितपदविततिं भवति ॥

यत्र पूर्वार्धे द्विगुणिताः अष्टौ गुरवः (१६) स्युः अपरखण्डे च द्वित्रिंशत् लधवः स्युः साऽनङ्गक्रीडा । वसुपदं अष्टसंख्यावाचकम् । सलिलनिधिपदं चतुःसंख्यावाचकम् । अत्र खण्डद्वयस्यापि आवर्तनं दृश्यते । ॥ ३८ ॥

अलषदिति स्पृहार्थकलषः लङ्रूपम् ।

अतिरुचिरा । तल्लक्षणं यथा—

त्रिगुणनवलघुरवसितिं गुरुरिति दलयुगकृततनुरतिरुचिरा ।

त्रिगुणिताः नवसंख्याकाः लधवः यत्र (९ × ३ = २७) अन्ते च गुरुरिति साऽतिरुचिरा । आहत्य अष्टाविंशतिवर्णाः । ॥ ३९ ॥

बालकाण्डः समाप्तः



---

1 कृते (क)

—अनुष्टुप् प्रकरणम्—

अयोध्याकाण्डः

**ऐच्छदथो पृथिवीशो राममसावभिषेक्तुम् ।**
**राज्य इह प्रकृतीनां वाचमिमामुपलाल्य ॥ १ ॥**

**लोके राजन् रामप्रख्यो राज्ञां पुत्रो नाश्रावि प्राक् ।**
**चित्रं भाग्यं ते यज्जातो रामः सूनुर्वीरो धीरः ॥ २ ॥**

**येन पदा स्पृष्टशिला मीनदृगास क्षितिप ।**
**शैवधनुर्भग्नमभूश्चित्रममुष्याचरितम् ॥ ३ ॥**

---

वर्णसमवृत्तेषु वृत्तरत्नाकरस्थोक्तामारभ्य हंसमालापर्यन्तानां अस्मिन् ग्रन्थे उदाहरणानि न सन्ति ।

चित्रपदा । तल्लक्षणं यथा–

भौ गिति चित्रपदा गः ।

यत्र भगणद्वयं गुरुद्वयं च स्यात् सा चित्रपदा । पादान्त एव यतिः । चतुर्ष्वपि चरणेषु एवमेव ।

इमां वाचमिति उत्तरत्र वक्ष्यमाणां इत्यर्थः । ॥ १ ॥

विद्युन्माला । तल्लक्षणं यथा ।

मो मो गो गो विद्युन्माला ।

यत्र मगणद्वयं गुरुद्वयं च भवति तत्र विद्युन्मालाछन्दः । मगणद्वयं गुरुद्वयं चेत्यनेन सर्वे गुरव इत्युक्तं भवति । सर्वेषु चरणेषु समानम् ॥ २ ॥

माणवकम् । तल्लक्षणं यथा–

माणवकं भात्तलगाः ।

**एनं संनयविभूषं स्वारूढावनिपपीठम् ।**
**दृष्ट्वाऽऽनन्दजलराशौ क्रीडां [1]भूप करवाम ॥ ४ ॥**

**हंसराट्स्वराभमेतदीरितं न भासमाप ।**
**कैकयीकुवाक्यकाकभीषणस्वरोत्तरेण[2] ॥ ५ ॥**

---

चरणचतुष्केऽपि भगणादूर्ध्वं तगणो लघुर्गुरुश्चेति यत्र निवेश्यते तत्र माणवकं नाम छन्दः । ॥ ३ ॥

हंसरुतम् । तल्लक्षणं यथा–

म्नौ गौ हंसरुतमेतम् ॥

प्रतिचरणं मगणनगणौ गुरुद्वयं चेति निवेशने हंसरुतं नाम छन्दः ।
॥ ४ ॥

राजहंसस्वर इव मधुरं प्रजानां वाक्यं, कैकेय्याः कुत्सितवाक्य काकभीषणस्वरोत्तरेण नाशोभत । सा तु किमपि विरुद्धं कर्कशमेवा भाणीदिति भावः ।

समानिका । तल्लक्षणं यथा–

रौ समानिका गलौ च ।

एकैकस्मिन्नपि चरणे यदा रगणजगणौ गुरुलघू चेति स्युस्तदा समानिकानामकं छन्दो भवति । ॥ ५ ॥

---

1 भूपतिरसम (क) 2 स्वरोत्करेण (क)

**ममात्मजो भुवः पतिर्भवेद्वनं रघूत्तमः ।**
**व्रजेदिति, स्म कैकयी ब्रवीति भर्तृगाद्वरात् ॥ ६ ॥**

**अथानृतोद्विग्नचित्तो न चाशकत्सान्त्वनेऽस्याः ।**
**यदा नृपः, प्राप्तखेदांस्तदाऽभवन् सर्वलोकाः ॥ ७ ॥**

—बृहतीविभागः—

**राघवस्तदनु पितृवाग्गौरवात्सुरमुनिकृते ।**
**अव्रजत्सहमुदटवीं जानकीसहजनिसहितः ॥ ८ ॥**

---

प्रमाणिका । तल्लक्षणं यथा—

प्रमाणिका जरौ लगौ ।

यत्र प्रतिचरणं जगणरगणौ लघुगुरू च स्यातां तत्र प्रमाणिका-नामकं छन्दः ।

पुरा देवदानवयुद्धे आकाशवाक्प्रेरिताः देवाः दानवसंहारार्थं दश-रथस्य साहाय्यमलभन्त । प्रवृत्ते सङ्गरे नमुचिभ्रातृकृतबाणवेधेन दशरथस्य रथाक्षः भग्नोऽभूत् । युद्धोद्यतेन राज्ञा न तल्लक्षितमासीत् । कैकय्या तत्रस्थया स्वकं हस्तमेव तत्र प्रक्षिप्य राज्ञः जयस्सम्पादितः । अयोध्यां प्रत्यागमनसमये राज्ञा वृत्तं सर्वं ज्ञात्वा कैकय्यै वरत्रयं दत्तमासीत् ।

**ब्रह्मपुराणम् अध्यायः १२३ आनन्दाश्रमः १८९५**

॥ ६ ॥

वितानम् । तल्लक्षणं यथा—

वितानमाभ्यां यदन्यत् ।

समानिकाप्रमाणिकाभ्यां भिन्नं वितनसंज्ञकं भवति । अत्र पृथग्-लक्षणं न कथितमतः लक्षणवाक्यमेवास्य वितानस्य लक्षणम् । ॥ ७ ॥

हलमुखी । तल्लक्षणं यथा—

**स्वविरहमतितिक्षून्स्वान् रघुपतिरखिलान् जन्तून् ।**
**अनुनययुगवस्थाप्य भजति गुहकृतार्चां स्म ॥ ९ ॥**

—पङ्क्तिविभागः—

**तीर्त्वा विष्णुपदीं सुरार्च्यजातपूजां प्राप्य ययौ रघूत्तमः ।**
**अद्रिं चित्रपदादिकूटसन्नाम्ना युक्तमिहावसन्मुदा ॥ १० ॥**

**एतर्हि स्वरगमदुर्वीशः श्रीरामस्य विरहतोऽथान्यौ ।**
**तत्पुत्राविह परतो देशादेत्याचेरतुरखिलं कृत्यम् ॥ ११ ॥**

---

रान्सराविह हलमुखी ।

रगणादुत्तरं नगणसगणयोर्निवेशाद्धलमुखीनामकं छन्दः भवति ॥ ८ ॥

भुजगशिशुभृता । तल्लक्षणं यथा–

भुजगशिशुभृता नौ मः ।

यत्र प्रतिचरणं नगणद्वयं मगणश्च स्यात् तत्र भुजगशिशुभृता नामकं छन्दः भवति । ॥ ९ ॥

सुरार्च्यो बृहस्पतिर्देवगुरुः । तस्माज्जातः भरद्वाजः । इयं कथा विष्णुपुराणे द्रष्टव्या—**अंशः ४ अध्यायः १९** । विष्णुपदी, गङ्गा ।

शुद्धविराट् । तल्लक्षणं यथा–

म्सौ ज्गौ शुद्धविराडिदं मतम् ।

यत्र प्रतिचरणं क्रमेण मगणसगणजगणाः एको गुरुश्च भवति तत्र शुद्धविराड्नामकं छन्दः भवति । ॥ १० ॥

पणवः । तल्लक्षणं यथा–

म्नौ य्गौ चेति पणवनामेदम् ।

**पर्वतं तमाप्तवानथारं कैकयीसुतः ससोदरादिः ।**
**तत्र राममानमन्ययाचे क्षाम्य सौम्य मातुराग एतत् ॥ १२ ॥**
**अग्रज पूर्नः काननमासीत्काननमेतत्पुर्यभवच्च ।**
**आगमदत्र श्रीरपि यस्माद्वक्षसि नित्यं ते कृतवासा ॥ १३ ॥**
**तत्रावासं पशुरभिलष्येन्नेमे पौराः वयमपि भूमन् ।**
**अस्मत्प्रीत्यै पुरमुपयातो रक्ष क्षोणीमवरजयुक्तः ॥ १४ ॥**

---

यत्र प्रतिचरणं मगणनगणयगणाः एको गुरुश्च तत्र पणवनामकं छन्दः । ॥ ११ ॥

अरं क्षिप्रम् ।

मयूरसारिणी । तल्लक्षणं यथा—

जौं रगौ मयूरसारिणी स्यात् ।

यत्र प्रतिचरणं रगणजगणरगणाः क्रमेण, अन्ते गुरुश्चैकः तत्र मयूरसारिणी स्यात् । ॥ १२ ॥

रुक्मवती[1] । तल्लक्षणं यथा—

भ्मौ सगयुक्तौ रुक्मवतीयम् ।

यस्य प्रतिचरणं भगणमगणसगणाः एको गुरुश्च भवन्ति तस्य रुक्मवतीति नाम । ॥ १३ ॥

अभिलष्येत् (क)

भूमन्निति विराट्पुरुषत्वमभिप्रेत्य परमात्मनो अवताररूपस्य रामस्य सम्बोधनम् ।

मत्ता । तल्लक्षणं यथा—

ज्ञेया मत्ता मभसगयुक्ता ।

---

1 रुग्मवती (क.फ.)

**तव वयं पदाब्जसेवकाः सततमार्य मोदिनस्त्वयि।**
**असति सम्पदो विपत्समाः नगरमेहि नो मुदं दिश ॥१५॥**

**ईरित एवं स्वावरजेन श्रीरघुवर्यः स्माह सुहासः।**
**भ्रातर्वैषि त्वं मम रीतिं गौरुभयी च द्विर्निरयात्किम्[1] ॥ १६ ॥**

---

यत्र प्रतिचरणं मगणभगणसगाः गुरुश्चान्ते भवेयुः तत्र मत्तानामकं छन्दः भवति। ॥ १४ ॥

मनोरमा। तल्लक्षणं यथा—

न रजगैर्भवेन्मनोरमा।

यत्र प्रत्येकस्मिन् चरणे नगणरगणजगणाः क्रमेण, गुरुश्चान्ते भवेयुस्तत्र मनोरमानामकं वृत्तम्। त्वयि असतीत्यन्वयः। ॥१५॥

गौर्वाक्। मनस्येकं कर्मण्येकं महात्मनाम्। इति पन्थानमनुसृत्य रामः सदा सत्यवाक् पूर्वोदितस्य वचसः परिवर्तनं कथञ्चिन्न कुर्यादिति प्रतिजानीते। 'द्विःशरं नाभिसन्धत्ते रामो द्विर्नाभिभाषत' इति वाल्मीकिवचोऽत्र स्मरणीयम्।

चम्पकमाला इति मातृकयोर्दृश्यते। परं एतौ द्वौ श्लोकौ रुक्मवतीलक्षणान्वितौ दृश्येते। रुक्मवत्याः एव नामान्तरेण अत्र पुनरुक्तिः किंनिमित्ता इति चिन्त्यम्। ॥ १६ ॥

---

1 ईरित एवं भरतेनासौ श्रीरघुवर्यः स्मितवानूचे।
मामकरीतिं खलु वेत्थ त्वं गौरुभयी द्विर्निरयात्किं मे ॥
'क'मातृकायां पुनरुक्तिपाठः

रक्षावनिमश्च पुरं त्वमेभियुक्तोऽनुजने विनयाढ्य खेदम् ।
मुञ्चाहमतीयुषि सप्तवर्षद्वंद्वे पुरगो भवितास्मि सत्यम् ।।१७।।

—त्रिष्टुप् प्रकरणम्—

रामोक्त एवं भरतोऽन्यथात्वे तस्य प्रतिज्ञां हुतभुक्प्रवेशे ।
चक्रे स तावन्न विशाम्ययोध्यामित्यादिकाश्चातिदृढाः प्रतिज्ञाः
।। १८ ।।

अथास्य चेतःशिरसोर्दधानः [1]स्वरूपपत्पीठयुगे स भक्त्या ।
प्रणामपूर्वं सकलैर्युतोऽगादलङ्घनीयत्वत ईशवाचः ।। १९ ।।

---

उपस्थिता । तल्लक्षणं यथा—

तजौ जो गुरुणेयमुपस्थिता ।

यत्र प्रतिचरणं क्रमेण तगणः जगणद्वयं गुरुश्चेति स्युस्तत्रोपस्थिता-नामकं छन्दः भवति । ।। १७ ।।

इन्द्रवज्रा । तल्लक्षणं यथा—

स्यादिन्द्रवज्रा यदि तौ जगौ गः ।

यदि प्रतिचरणं क्रमेण तगणद्वयं जगणो गुरुश्चान्ते स्यात् तदा इन्द्र-वज्रानामकं छन्दः भवति । ।। १८ ।।

चेतसि स्वरूपं शिरसि पादुकाद्वयं चेति यथासंख्यमन्वयः ।

उपेन्द्रवज्रा । तल्लक्षणं यथा—

उपेन्द्रवज्रा जतजास्ततो गौ ।

यत्र प्रतिचरणं क्रमतः जगणतगणजगणाः गुरुयुग्मं च स्युः तत्र उपेन्द्रवज्रानामकं छन्दः भवति । ।। १९ ।।

---

1 रूपं तथा पादुकयोर्युगं सः (फ)

**ग्रामे स नन्द्याह्वयिनि न्यवात्सीत्तदीयपत्पीठमहीशबुद्धिः ।**
**रघुप्रवीरोऽपि स चित्रकूटे सहावसल्लक्ष्मणजानकीभ्याम् ।।२०।।**
**कदाचिदत्रोपगतोऽ[1]क्षिदैत्यस्तुण्डेन पस्पर्श कुचं जयन्तः ।**
**अरिष्टरूपः पृथिवीसुताया अरिष्टसंज्ञामनुरूपयन्वा ।। २१ ।।**
**तदा तृणं प्रक्षिपति स्म तस्मै स रामभद्रोऽपहृतारिभद्रः ।**
**यातोऽनुयातो ज्वलता स तेन प्रभोर्हि लोके तृणमेव शस्त्रम्**
**।। २२ ।।**

---

प्रथमपादेन्द्रवज्रोपजातिः ।

प्रथमपादे क्रमेण तगणद्वयं, जगणः गुरुद्वयं उत्तरत्र पादेषु तगणद्वयं जगणः गुरुद्वयञ्चेति उपेन्द्रवज्रालक्षणलक्षितत्वम् । तथा चोक्तम् ।

एकत्र पादे चरणद्वये वा पादत्रये वान्यतरः स्थितश्चेत् ।
तयोरिहान्यत्र तदोहनीयाः चतुर्दशोक्ता उपजातिभेधाः ॥ इति ॥

प्राक्तनाचार्यैः एषां भेदानां चतुर्दश नामान्यपि निर्दिष्टानि सन्ति ।

" कीर्तिर्वाणी तथा माला शाला हंसी तथैव च ।
माया जाया तथा बाला आर्द्रा भद्रा ततः परम् ।
प्रेमा रामा तथा ऋद्धिर्बुद्धिश्चैव विलक्षणैः ।
उक्तान्येतानि नामानि विज्ञेयानि यथाक्रमम् ॥" इति ।

एतदनुसारेण अस्य भेदस्य बुद्धिः इति नामधेयम् । ॥ २० ॥

द्वितीयपादेन्द्रवज्रोपजातिः । अस्य भेदस्य ऋद्धिरिति नाम । अरिष्टः, काकः ।

तृतीयपादेन्द्रवज्रोपजातिः । अस्य भेदस्य प्रेमेति नामधेयम् ।

---

1 अक्षिण दैत्य (क-फ)

प्रदर्शयन्वा बलिभोगरीतिं स तत्र तत्रेत्य बहिष्कृतोऽभूत् ।
अजादिभिः, प्रौढियुता हि लोके नावन्ति पुंसो बलिनो विपक्षम्
॥ २३ ॥

अलब्धनाथो रघुनाथमाप्तः पाहीति पक्षी पदयोः पपात ।
नामुं जघानैष विपक्षरूक्षः पादप्रपन्नावनदक्षदीक्षः ॥ २४ ॥

दुर्बुद्धिदं तस्य कुरङ्गदैत्यं दयां वितन्वन्निव तत्र रामः ।
अक्ष्णा सहानाशयदेष तस्मादक्षिक्षयोऽसौ दितिजो द्विकाऽभूत्
॥ २५ ॥

## अरण्यकाण्डः

---

स्वायत्तीकृतसकलचराचरस्य प्रभोः परमात्मनः प्रसङ्गे सति यत्कसन्निहितं भवति तृणमेव वा तस्मादप्यल्पं किमपि वा तदेव शस्त्रवद्भवति। निमित्तमात्रं तदित्यर्थः ।

चतुर्थपादेन्द्रवज्रोपजातिः । अस्या नामधेयं जायेति ।

बलिभोगः, काकः । सन्तः सत्यपि रक्षणसामर्थ्ये पाण्डित्ये वा बलिनः शत्रुं विपक्षभूतं च रक्षन्ति इत्यर्थः । इतरदेवानामपेक्षया विष्णोः बलीयस्त्वं प्रकटितं भवति । ॥ २३ ॥

प्रथमपादोपेन्द्रवज्रोपजातिः । अस्याः नामधेयं कीर्तिरिति । विपक्षविषये कठिनोऽप्ययं पादप्रपन्नावने दीक्षावानेव । अतस्तद्विषये स्वपक्षविपक्षविषय एव नास्तीति अनेन विशेषणेन उत्तरत्र विभीषणरक्षणमपि एवमेव भवितेति व्यज्यते । ॥ २४ ॥

द्वितीयपादोपेन्द्रवज्रोपजातिः । अस्याः नामधेयं वाणीति ।

अयं कथाभागः श्रीमदानन्दतीर्थभगवत्पादविरचित महाभारततात्पर्यनिर्णयमनुसृत्य कल्पितः । वाल्मीकिरामायणेऽन्यत्र वा जयन्त एव कामी

**आकर्ण्य रक्षःकृतयोगिचित्तक्षोभं स सीतासहजन्मयुक्तः ।**
**वनं गतोऽभूदथ दण्डकाऽऽख्यं दण्डाय रक्षोनिचयस्य शौण्डः**
**॥ २६ ॥**

**तत्रानुजग्राह मुनिं स रामः संवित्तपोभ्यां वयसा च वृद्धम् ।**
**युक्तं दयालुः शरभङ्गनाम्ना विराधरक्षोऽदमयत्तथाऽवीत् ॥२७॥**

**नानाश्रमस्थैर्मुनिभिः खलानां सम्प्रार्थितः संहृतयेऽथ रामः ।**
**अगादगस्त्याश्रममस्य तुष्ट्यै निजेष्टदानादपरोऽस्य कोऽर्थः ॥२८॥**

---

सम्भूय काकवपुषा सीतां तुण्डेन व्यदारयदिति दृश्यते । श्रीमदाचार्यैस्तु अस्यापराधस्य प्रयोजकोऽसुर इति जयन्तः निर्दोषीकृतः । ॥ २५ ॥

**महाभारततात्पर्यनिर्णयः अध्यायः ५**

तृतीयपादोपेन्द्रवज्रोपजातिः । अस्याः नाम शालेति । शौण्डः निपुण इति । ॥ २६ ॥

संविदा तपसा च वृद्धम् । संवित् ज्ञानम्, तपः नियमः, ताभ्यां वृद्धम् । ज्ञानातिशयशालिनमिति यावत् । विराधं गर्ते पातयित्वा तस्य रक्षोरूपोचितां शिक्षां विधाय, तदनन्तरं शापमोचनरूपरक्षणं कृतवानिति ज्ञेयम् ।

[1]चतुर्थपादोपेन्द्रवज्रोपजातिः । अस्याः नाम बालेति ।

वाल्मीकिरामायणे प्रथमं विराधदमनमनन्तरं च शरभङ्गस्वर्गगमनवीक्षणमिति क्रमो दृश्यते । ॥ २७ ॥

प्रथमार्धेन्द्रवज्रोपजातिः । अस्याः नाम रामेति ।

---

1 अन्त्यपादेपेन्द्रा (फ)

वर्यां सपर्यां विरचय्य योगी तदा मुदा दारसहोदराभ्याम् ।
युक्ताय रामाय सुरेन्द्रदत्तं ददौ धनुः, शार्ङ्गमसिं च तूणी
॥ २९ ॥

आमन्त्र्य तं पञ्चवटीमवाप्तः तदुक्तमार्गेण रघुप्रवीरः ।
इहानुजातेन कृतां विशालां स पर्णशालां मुदितोऽध्यतिष्ठत्
॥ ३० ॥

कदाचिदत्रोपजगाम सौम्यं पतिं विचिन्वत्यनुजा त्रिलोक्याम् ।
रक्षःपतेः शूर्पणखा प्रमादात्पत्यौ हतेऽनेन निदेशतोऽस्य
॥ ३१ ॥

---

खलसंहारार्थं सज्जनावनार्थं च अवतीर्णस्य रामस्य तदतिरिक्तं स्वीयं किमपि प्रयोजनं नास्त्यतः तदर्थमेव अगस्त्याश्रममसौ जगामेति तात्पर्यम् ।
॥ २८ ॥

प्रथमतृतीयपादेन्द्रवज्रोपजातिः । अस्याः नाम भद्रेति ।

विश्वकर्मणा निर्मितं वैष्णवं चापं, महेन्द्रदत्तौ अक्षयसायकौ तूणी, खड्गं च ददावगस्त्यः ।
॥ २९ ॥

प्रथमचतुर्थपादेन्द्रवज्रोपजातिः । अस्याः नाम मायेति । तदुक्तमार्गेण, अगस्त्योक्तपथेनेति ।
॥ ३० ॥

प्रथमार्धेन्द्रवज्रोपजातिः । अस्याः नाम मालेति ।

रावणस्य भगिनी शूर्पणखा । अस्याः मातुर्नामधेयं राकेति । खरो राक्षसोऽस्याः पितृव्यपुत्रः । कालकेयाधीशः विद्युज्जिह्वो नाम शूर्पणखायाः भर्ता । स च कदाचित् अश्मनगरे अज्ञानवशात् रावणेन

अनादिभक्त्यैव वशीकृतो यो लक्ष्म्यापि तं प्रार्थयते स्म कामात् ।
पतिर्भव त्वं म इतीयमज्ञा चित्ते सकामे हि कुतो विमर्शः
॥ ३२ ॥

विदेहजावक्त्रमवेक्ष्य रामः सक्तोऽहमस्यां सहजस्य मे स्याः ।
पत्नीत्यवादीदथ सा तमाप्ता धवो मम स्याः सुमुखेत्यवादीत्
॥ ३३ ॥

इति चतुर्दशोपजातयः ।

---

ख्यापादितः । अनन्तरं सा रावणाज्ञया दण्डकारण्ये खरसमीपे न्यवसदिति अस्याः वृत्तान्तः । ॥ ३१ ॥

**महाभारतं वनपर्व**

प्रथमतृतीयपादोपेन्द्रवज्रोपजातिः । अस्याः नाम हंसीति । कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु इति मेघदूते कालिदासोक्तिरत्र स्मर्तव्या । तत्र कामिनः चेतनाचेतनविषयगतं कृपणत्वं अत्र तु योग्यायोग्यविषयक-विमर्शाभाववत्त्वमिति भेदः । शूर्पणखायाः श्रीरामं प्रति पतिर्भवेति प्रार्थने तस्याः अज्ञानमेव कारणम् । रामोऽयं लक्ष्मीरूपया सीतया अनादिभक्ति-वशीकृतः कलत्रवानिति ज्ञात्वापि कथं शूर्पणखा तं पतित्वेन अयाचत इत्यस्य परिहारः चित्ते सकाम इति । ॥ ३२ ॥

प्रथमान्त्यपादोपेन्द्रवज्रोपजातिः । अस्याः नाम आर्द्रेति ॥ ३३ ॥

एवमुक्तानां चतुर्दशभेदानां भेदप्रदर्शकं कोष्टकं उत्तरत्र निर्दिश्यते ।

## उपजातिकोष्टकम्

| १ पादः | २ पादः | ३ पादः | ४ पादः | नामधेयानि |
|---|---|---|---|---|
| **इ** | उ | उ | उ | बुद्धिः |
| उ | **इ** | उ | उ | ऋद्धिः |
| उ | उ | **इ** | उ | प्रेमा |
| उ | उ | उ | | जाया |
| **उ** | इ | इ | इ | कीर्तिः |
| इ | **उ** | इ | इ | वाणी |
| इ | इ | **उ** | इ | शाला |
| इ | इ | इ | **उ** | बाला |
| **इ** | **इ** | उ | उ | रामा |
| **इ** | उ | **इ** | उ | भद्रा |
| **इ** | उ | उ | **इ** | माया |
| **उ** | **उ** | इ | इ | माला |
| **उ** | इ | **उ** | इ | हंसी |
| **उ** | इ | इ | **उ** | आर्द्रा |

इ = इन्द्रवज्रा उ = उपेन्द्रवज्रा ।

महाक्षराणि तत्तदुपजातिवैशिष्ट्यस्य स्पष्टीकरणार्थं आङ्कितानि ।

**सुमुखि भवाम्यहमार्यवशः स्ववशममुं भज सत्कुलजे ।**
**इति रघुपानुजवाक्यमिदं हितमिति साऽऽप पुनारघुपम् ॥३४॥**

**कान्त इहासि ममैव सपत्नी तिष्ठति जक्षिमि सत्वरमेनाम् ।**
**इत्थमयोचद्दुताभिगतेमां भूमिसुतां सहजा खलराजः ॥ ३५ ॥**

**हार्द ज्ञात्वा लक्ष्मणः स्वाग्रजस्य**
**प्रौढः सद्यो राक्षसीकर्णनासम् ।**
**कृत्तं चक्रे चन्द्रहासेन साऽथो**
**रक्तस्नाता रोदमाप्ता बभूव ॥ ३६ ॥**

---

सुमुखी । तल्लक्षणं यथा—

नजजलगैर्गदिता सुमुखी ।

यत्र क्रमेण नगणः जगणद्वयं लघुर्गुरुरिति च भवन्ति तत्र सुमुखी-नामकं छन्दः । पञ्चमे षष्ठे च यतिः । अत्र सुमुखीति सम्बोधनं तस्मिन्नेव वृत्ते निवेशितं कवेश्चातुर्यं प्रकटयति । अहं तु अग्रजाधीनः अग्रजस्तु स्वाधीनः यथेच्छं दयिताः प्राप्तुं शक्त इति लक्ष्मणः अपहसति ॥ ३४ ॥

दोधकम् । तल्लक्षणं यथा—

दोधकवृत्तमिदं भभभाद्गौ ।

यत्र क्रमेण भगणत्रयं गुरुद्वयं च स्यात् तत्र दोधकवृत्तम् । पादान्त एव यतिः । खलराट् रावणस्तस्यानुजा शूर्पणखी । ॥ ३५ ॥

शालिनी । तल्लक्षणं यथा—

शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ।

यत्र क्रमेण मगणः, तगणद्वयं गुरुद्वयं च भवेत्तत्र शालिनीनामकं छन्दः भवति । अब्धयः ४ लोकाः ७ तत्र यतिः । रोदमाप्ता बभूव, रुरोदेति यावत् । ॥ ३६ ॥

रक्षोयोषित्क्षतराहूपरक्तो जातो दिक्षु प्रततः कीर्तिचन्द्रः ।
न्यक्कुर्वाणः सुमनःकीर्तितारा: लङ्केशाख्याद्रिविर्यात्प्रभूतः
॥ ३७ ॥

रक्षोयोषित्तदनु खरमुखं पश्यन्ती दूषणमरिरचितम् ।
तन्त्वामेषा स्मृतसहजयुगा शीघ्रेणागात्तदुभयनिकटम् ॥ ३८ ॥
सोदरीपरिभवं खरोऽशृणोदीक्षतापि सहदूषणस्ततः ।
कोपतापनिजमानहानितश्चाभवत्स तु खरः सदूषणः ॥ ३९ ॥

---

वातोर्मी । तल्लक्षणं यथा—
वातोर्मीयं गदिता म्भौ तगौ गः ।

यत्र क्रमेण मगणभगणतगणाः गुरुद्वयं च स्युः तत्र वातोर्मीनामकं छन्दः भवति। चतुर्भिः सप्तभिश्च यतिः । रक्षोयोषित् शूर्पणखा। रावणरूपात्पर्वतात्प्रभूतः दिक्षु प्रततः कीर्तिचन्द्रः रामादिसुमनःकीर्तिरूपताराः न्यक्कुर्वाणः, रक्षोयोषित्क्षतरूपेण राहुणा ग्रस्तोऽभूदिति भावः । रावणस्यायत्यां सम्भवनीयस्य पराभवस्य दुर्निमित्तमेतद्योषित्क्षतम् । ॥ ३७ ॥

भ्रमरविलसितम् । तल्लक्षणं यथा—
म्भौ न्लौ गः स्यात् भ्रमरविलसितम् ।

यत्र क्रमेण मगणभगणनगणाः, लघुर्गुरुश्चेति भवन्ति तत्र भ्रमरविलसितं छन्दः भवति । अत्रापि चतुर्भिः सप्तभिश्च यतिः ।

खरमुखं अरिरचितं दूषणं तन्त्वां पश्यन्तीति, निष्ठुरतरं कर्णनासाच्छेदनरूपं इत्यर्थः । अत्र प्रसङ्गात्खरदूषणनामनी समागत इति विशेषः । सहजयुगं खरदूषणौ । ॥ ३८ ॥

रथोद्धता । तल्लक्षणं यथा—
रान्नराविह रथोद्धता लगौ ।

**शक्करीमितसहस्रकसंख्यै रूक्षवेषयुतराक्षसवर्यैः ।**
**युक्त एष रघुनायकपार्श्वे दूषणेन सहितोऽगमदज्ञः ॥ ४० ॥**

**रघुपतिरपि पुर एवोचे सहजनिमिह वस वैदेह्या ।**
**सह बिल उरूग्रण आसन्नः स्फुरति हि मम भुज एषोऽलम्**
**॥ ४१ ॥**

---

यत्र क्रमेण रगणनगणरगणाः लघुर्गुरुश्चेति भवन्ति तत्र रथोद्धता छन्दः । अत्र पादान्त एव यतिः ।

सदूषणः स खरः खरो जातः, उग्रो जात इत्यर्थः । ॥ ३९ ॥

स्वागता । तल्लक्षणं यथा–

स्वागतेति रनभाद्गुरुयुग्मम् ।

यत्र क्रमेण रगणनगणभगणाः गुरुद्वयं च भवन्ति तत्र स्वागतानामकं छन्दः भवति । पादान्त एव यतिनियमोऽत्रापि । शक्करी, अङ्गुली । तथा गृहीते सति तन्मितसहस्रसंख्यैः गगनार्हसहस्रसंख्यैरल्पसंख्याकैरित्यर्थः पर्यवस्यति । परं रामायणे खरः चतुर्दशसहस्रसंख्याकैः स्वराक्षसयोधैस्साकं रणमनूद्गतः इति स्पष्टं दृश्यमानत्वात् 'शक्करी' नाम शतुर्दशाक्षरपरिमितवृत्तमित्यवगन्तव्यम् । तदा चतुर्दशसहस्रसंख्यैरिति अभीष्टोऽर्थः लभ्यते । ॥ ४० ॥

वृत्ता । तल्लक्षणं यथा–

ननसगगुरुरचिता वृत्ता ।

यत्र पादे नगणद्वयं, सगणः, गुरुद्वयं च स्यात् तत्र वृत्तानामकं छन्दः भवति । चतुर्भिः सप्तभिश्च यतिः । ॥ ४१ ॥

निगदित इति रामसोदरः सह जनकजया स्थितो बिले ।
रघुपतिरपि दंशितोऽदधत्सशरधनुरवस्थितो युधे ॥ ४२ ॥

राघवाग्निकुण्डमध्य उद्गणे [1]राक्षसीहुतः पलाशरूपकः ।
तत्सहोदराख्यभृङ्गयुग्मको दग्ध आ सत्वरं समिच्चयः[2] ॥ ४३ ॥

श्रीरघुनाथे द्युकुसुमजालं वृष्टममर्त्यैः सुमुदमवाप्तैः ।
योजितवन्तः प्रवचनमाशीरूपमृषीशा विततगुणाढ्य ॥ ४४ ॥

---

भद्रिका । तल्लक्षणं यथा—

ननरलगुरुभिश्च भद्रिका ।

यत्र पादे क्रमेण नगणद्वयं, रगणः, लघुर्गुरुश्चेति भवन्ति तत्र भद्रिका नामकं छन्दः भवति । पादान्ते यतिः । दंशितः, कवचसन्नद्धः ।
॥ ४२ ॥

श्येनिका । तल्लक्षणं यथा—

श्येनिका रजौ रलौ गुरुर्यदा ।

यत्र क्रमेण रगणजगणरगणाः लघुर्गुरुश्चेति भवन्ति तत्र श्येनिका-नामकं वृत्तम् । पादान्त एव यतिः । समित् द्विशृङ्गा होमार्थ-मुपयुज्यते । अत्र राक्षसीहुतः पलाशरूपकः समिच्चयः खरदूषणाख्य-[illegible]शीर्षयुक्त इति उभयोः साम्यम् । ॥ ४३ ॥

[3]श्रीः । तल्लक्षणं यथा—

पञ्चरसैः श्रीर्भतनगगैः स्यात् ।

---

1 राक्षसो (क)   2 सेनिका (फ)   3 श्रीर्वृत्तम् (फ)

अथाश्रमपदं [1]यातं मुनीन्द्रैः परीतमनमत्सौमित्रिरीशम् ।
विदेहदुहिताश्लिष्टा स्वनाथं गिरीन्द्रबिलतो निर्गत्य तूर्णम्
॥ ४५ ॥

नाशमवापत्सुरमुनि[2]गापत्तत्र सरामे निवसति रामे ।
आहवशौण्डे सुगुणकरण्डे लक्ष्मणमित्रे सरसिजनेत्रे ॥ ४६ ॥

—जगतीविभागः—

[3]शूर्पणख्यथ गता जलधिगतामग्रजाय नगरीमवददरी ।
आत्मरूपविकृतेः, स्वजनहतेः कारणेऽल[4]महितां जनकसुताम्
॥ ४७ ॥

---

यत्र क्रमेण भगणतगणनगणाः गुरुद्वयं च भवन्ति तत्र श्रीनामकं वृत्तम् । पञ्चभिः षड्भिश्च यतिनियमः । अस्य मौक्तिकमालेति नामान्तरम् । ॥ ४४ ॥

उपस्थितम् । तल्लक्षणं यथा—

उपस्थितमिदं ज्सौ ताद्गकारौ ।

यत्र क्रमेण जगणः सगणः, तगणः गुरुद्वयं च भवति तत्र उपस्थितं नाम छन्दः भवति । पादान्ते यतिः । ॥ ४५ ॥

मौक्तिकमाला । तल्लक्षणं यथा—

मौक्तिकमाला यदि भतनाद्गौ ।

यत्र चरणेषु क्रमेण भगणतगणनगणाः गुरुरेकश्च भवन्ति तत्र मौक्तिकमाला छन्दः । पञ्चभिः सप्तभिश्च यतिः । ॥ ४६ ॥

चन्द्रवर्त्म । तल्लक्षणं यथा—

---

1 यान्तं (क) 2 गापतप्र (क.फ.) 3 शूर्पणख्यधिता (क) 4 त्वमहितां (क) च्छ (म) हितां (फ)

करद्वयेनैव सुरादिनिर्जयात्कराः परे मे विधिना वृथा कृताः
इति ब्रुवाणस्य तदा स रक्षसो[1] व्यधात्पदं गर्व इहापदां ननु
॥ ४८ ॥

आरूढयानोऽथ गतः स रावणो
मारीचमाह स्म सखे खरादयः ।
मर्त्येन रामेण हताः स्वसुः श्रवो-
नासं च तस्यानुजनिर्विलूनवान् ॥ ४९ ॥

---

चन्द्रवर्त्म गदितं तु रनभसैः ।

यत्र चरणेषु क्रमेण रगणनगणभगणसगणाः भवन्ति तत्र चन्द्रवर्त्म-नामकं छन्दः । चतुर्भिरष्टभिश्च यतिनियमः । ॥ ४७ ॥

वंशस्थम् । तल्लक्षणं यथा–

जतौ तु वंशस्थमुदीरितं जरौ ।

यत्र चरणेषु क्रमेण जगणतगणजगणरगणाः भवन्ति तत्र वंशस्थ-नामकं छन्दः । अत्र पादान्ते यतिः । ॥ ४८ ॥

इन्द्रवंशा । तल्लक्षणं यथा–

स्यादिन्द्रवंशा ततजै रसंयुतैः ।

यत्र क्रमेण चरणेषु तगणद्वयं जगणो रगणश्च भवन्ति तत्र इन्द्र-वंशावृत्तम् । पादान्त एव यतिः । ॥ ४९ ॥

---

1 व्यथापदं (क.फ)

मम चापगतं तत एव बत
श्रव अर्जितकीर्तिगुणावरणात् ।
गतनासिकवीरसमोऽस्म्यधुना
स्वसृसाम्यमवापि मया हि ततः ॥ ५० ॥

अहममुष्य कलत्रहृतौ यते भवतु तत्र सखा चतुरो भवान् ।
इति निशाचरनाथसमीरितो निशिचरो निजगाद भयाकुलः
॥ ५१ ॥

शृणु [1]निशिचरकेतो चित्रशक्ति–
र्दशरथतनयोऽयं तद्विरोधः ।
न भवति शुभहेतु[2]र्नीतिवेदिन्
इदमनुभवसिद्धं मे द्विवारम् ॥ ५२ ॥

---

तोटकम् । तल्लक्षणं यथा–
इह तोटकमम्बुधिसैः प्रथितम् ।

यत्र क्रमेण चरणेषु सगणचतुष्टयं भवति तत्र तोटकाख्यं वृत्तम् । पादान्ते यतिः । मम श्रवश्च अपगतम् इति छेदः । यद्वा चापगतं यशः अपगतम् ' यशोनाशादपकीर्तिर्या तयाहं नासारहितो वीर इवा-भवम् । अत एवाहं शूर्पणखीसम इति रावणविलापः । ॥ ५० ॥

द्रुतविलम्बितम् । तल्लक्षणं यथा–
द्रुतविलम्बितमाह नभौ भरौ ।

यत्र क्रमेण चरणेषु नगणो भगणद्वयं रगणश्चेति भवन्ति तत्र द्रुत-विलम्बितं छन्दः । पादान्त एव यतिः । निशिचरोऽत्र मारीचः ॥ ५१ ॥

पुटवृत्तम् । तल्लक्षणं यथा–

---

1 निशिचरतेतो (क) 2 नैतिवेदिन् (क)

मम मतममतं ब्रुवाणो रिपोः
प्रिय इह लघु हन्यसे त्वं मया ।
अवददिति स रावणोऽथामतं
मतमतनुत ताटकेयः खलः ।। ५३ ।।

तदनु स दुष्टः पुरटमृगात्मा व्यचरदरण्ये जनकसुताग्रे ।
इममवलोक्य स्वपतिमवोचद्दिश मृगमेनं म इति तदा सा
।। ५४ ।।

---

वसुयुगविरतिर्नौ प्यौ पुटोऽयम् ।

यत्र चरणेषु क्रमेण नगणद्वयं मगणो यगणश्चेति भवन्ति तत्र पुट-नामकं वृत्तम् । अष्टसु चतुर्षु च यतिः ।

पूर्वं विश्वामित्रकृते यज्ञे तस्य विघ्नमाचरन् मारीचः प्रथमं रामास्त्रपराभूतः समुद्रे प्रक्षिप्तो बभूव । पुनश्च दण्डकारण्ये तापसं रामं निर्वीर्यं मन्यमानः पूर्ववैरमनुस्मरन् तमभ्यधावत् । तदापि रामास्त्रेण पराजितः युद्धोद्योगं विहाय प्रव्रजित इति द्विधा तस्य रामास्त्रजोऽनुभवः ।

वा. रा. अरण्यकाण्डम् ३९-४०
॥ ५२ ॥

प्रमुदितवदना । तल्लक्षणं यथा—

प्रमुदितवदना भवेन्नौ च रौ ।

यत्र क्रमेण पादेषु नगणद्वयं रगणद्वयं च स्यात्तत्र प्रमुदितवदनाऽऽख्यं वृत्तम् । पादान्ते यतिः । ताटकेयस्य मारीचस्य खलत्वं रावणभीतिजनितम्
॥५३॥

कुसुमविचित्रा । तल्लक्षणं यथा—

नयसहितौ न्यौ कुसुमविचित्रा ।

अथो रघुपतिः सहोदरमिमामवे[1]त्यद्रुतः स्वयं छलमृगम् ।
प्रगृह्य सशरं धनुश्छलनरो झटित्यनुगतो हृतः स च तदा
॥ ५५ ॥

ककुत्स्थाग्रणीरप्यनुद्रुत्य चित्रं
मृगं यापयामास बाणेन मृत्युम् ।
छले सत्यमन्यं हि रूपादि लोके
विमिश्रं विषेणेव सुस्वादु भोज्यम् ॥ ५६ ॥

---

यत्र चरणेषु क्रमेण नगणयगणनगणयगणाः भवन्ति तत्र कुसुमविचित्रानामकं छन्दः । अत्र पादान्ते यतिः नारायणभट्टमते । षड्भिः षड्भिरिति वृत्तिकारमतम् । पुरटं सुवर्णम् । ॥ ५५ ॥

रथोद्धतगतिः । (जलोद्धतगतिरिति वृत्तरत्नाकरः)

तल्लक्षणं यथा—

रसैर्जसजसा जलोद्धतगतिः ।

यत्र पादेषु क्रमेण जगणसगणजगणसगणाः भवन्ति तत्र रथो (जलो) द्धतगतिः वृत्तम् । रसैः, षड्भिःषड्भिश्च यतिनियमः । ॥ ५५ ॥

भुजङ्गप्रयातम् । तल्लक्षणं यथा—

भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ।

यत्र पादेषु क्रमेण यगणचतुष्कं समाविशति तत्र भुजङ्गप्रयातं वृत्तम् । पादान्ते यतिः । कपटिनो रूपं विषमिश्रितस्वाद्वोदनवत् सर्वथा निन्द्यं भवति इति श्लोकभावः । ॥ ५६ ॥

---

1 त्यवगुतः (क)

स व्रजन्मृत्युमाक्रोशदुच्चं खलो
    लक्ष्मणेत्येष पौलस्त्यकार्याशये ।
वक्रधीर्दुःखकालेऽपि तां न त्यजे
    त्किन्तु तद्दुःखमन्यस्य [2]चेच्छेन्ननु ॥ ५७ ॥

श्रुतखरस्वरविदेहपुत्रिकावचनतो रघुपवर्त्म लक्ष्मणः ।
तदनु चापभृदगात्तदा[2]श्रमं पिशितभक्ष्यगणमौलिराययौ ॥५८॥

---

स्रग्विणी ।   तल्लक्षणं यथा–

रैश्चतुर्भिर्युता स्रग्विणी संमता ।

यत्र चरणेषु क्रमेण रगणचतुष्कं भवति तत्र स्रग्विणी छन्दः । पूर्वं दृष्टरामास्त्ररुचिना मारीचेन मौनिना सता भर्तव्यमासीत् । परन्तु तस्य वक्रधीः तथा कर्तुं नैच्छत् । अत एव सीतालक्ष्मणवित्रासजननरूप लक्ष्मणेत्यादि व्याक्रोशत् ।                                   ॥ ५७ ॥

प्रियंवदा ।   तल्लक्षणं यथा–

भुवि भवेन्नभजरैः प्रियंवदा ।

यत्र चरणेषु क्रमेण नगणभगणजगणरगणाः भवन्ति तत्र प्रियंवदा-नामकं छन्दः ।   पादान्ते यतिः ।                                   ॥ ५८ ॥

पिशितभक्ष्यगणमौलिः, पिशितं मांसं तदेव भक्ष्यं येषां ते राक्षसाः पिशिताशनाः तेषां समूहे मौलिस्थानापन्नः राक्षसराजः रावण इत्यर्थः ।

---

1 च प्रार्थयेत् (क)   2 इ.र्मणि (क)

सीताऽथ तिरोऽभूत्सृष्ट्वा प्रतिमां स्वां
रक्षोवधसिद्ध्यै वंद्या विबुधानाम् ।
श्रीराममतज्ञा कैलासमवाप्ता
रेमेऽत्र च पूजामाप्ता शिवचीर्णाम् ॥ ५९ ॥

सीतामवेत्य पिशिताशनेश्वरः सीतासमाकृतिविभूषणान्वितम्
सीताऽऽकृतिं सपदि नीतवांस्तदा सीतां त्यजेत्यरणदाशु गृध्रराट्
॥ ६० ॥

खरतुण्डपक्षनखहेतियुतो रघुनाथपक्षमवलम्ब्य खगः ।
स निरस्तराक्षसवधादिरुत स्तवमन्तरिक्षचरचीर्णमगात्
॥ ६१ ॥

---

मणिमाला । तल्लक्षणं यथा—
त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ।
यत्र चरणेषु क्रमेण तगणयगणतगणयगणाः भवन्ति तत्र मणिमालाभिधं वृत्तम् । गुहवक्त्राणि षट् । एवं षट्सु षट्सु यतिः ।

अत्र सीता राममतज्ञा स्वां प्रतिमां सृष्ट्वा स्वयं कैलासमगमदिति यदुच्यते तद्वाल्मीकिरामायणे न दृश्यते । महाभारततात्पर्यनिर्णये कैलासमाप्तायाः सीतायाः सन्निधियुतां आश्रमस्थप्रतिकृतिं व्यवहारसिद्ध्यै इन्द्रः प्रविवेश इति दृश्यमानत्वात् सीतापहरणघटना पवित्रीकृता । शिवचीर्णामित्यस्य शिवाभ्यां चीर्णामित्यर्थः । ॥ ५९ ॥

ललिता । तल्लक्षणं यथा—
धीरैरभाणि ललिता तभौ जरौ ।
यत्र चरणेषु क्रमेण तगणभगणजगणरगणाः प्राप्नुवन्ति तत्र ललितानामकं छन्दः । पादान्त एव यतिः । गृध्रराट् जटायुः ॥ ६० ॥

प्रमिताक्षरा । तल्लक्षणं यथा—

[1]अथ कुपितनराशिरासिना खगपतिरभिताडित [2]उद्भगम् ।
अगमदुभयथापि विपक्षतां रघुपतिपरिसेवनसाग्रहः ।। ६२ ।।

लङ्कानाथोऽयं भूमिजासक्तचित्तो
निश्शङ्कः प्रायात्तूर्णमेनां गृहीत्वा ।
लङ्कां तत्रेयं मध्य आवसमाभो-
द्रम्याशोकानां शोकजालापहानाम् ।। ६३ ।।

---

प्रमिताक्षरा सजससैरुदिता ।

यत्र पादेषु क्रमेण सगणजगणौ सगणद्वयं च भवन्ति तत्र प्रमिताक्षरा-वृत्तम् । पादान्त एव यतिः ।

हेतिः आयुधम् । अन्तरिक्षचरचीर्णं स्तवमगाज्जटायुः । रावणं स यदा न्यपातयत्तदा हृष्टानि अन्तरिक्षचारिभूतानि, देवा वा गृध्रराजं अस्तौषुः । ।। ६१ ।।

उज्ज्वला । तल्लक्षणं यथा-

ननभरसहिताऽभिहितोज्ज्वला ।

यत्र चरणेषु क्रमेण नगणद्वयं भगणरगणौ च स्युः तत्रोज्ज्वला नामकं छन्दः । पादान्ते यतिः । उभयथा विपक्षत्वं पक्षभङ्गात् शत्रुवाच्च । पूर्वं रावणेन साकं केवलं शत्रुत्वमात्रमासीत् । ।। ६२ ।।

वैश्वदेवी । तल्लक्षणं यथा-

पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ।

---

1 उत (क)   2 उल्बलम् (क)

सीतात्यागं सहजनिचीर्णं तूर्णं
पर्णावासं विनिहतदुष्टोऽनन्दत् ।
रामो व्याप्तः सुखमयकायः पश्यन्
व्याप्तां सीतामभवदपश्यन्नैषः ॥ ६४ ॥

[1]व्यलपदतीव लोकमनुकुर्वन्
स्वरमण [2]एष राघव उदारः ।
क्व जनकजे गतासि बत हित्वा
गहनवनेऽत्र मां स्वजनहीनम् ॥ ६५ ॥

---

यत्र क्रमेण मगणद्वयं भगणद्वयं च भवति तत्र वैश्वदेवीनामकं छन्दः । पञ्चसु सप्तसु च यतिः । अश्वाः सूर्याश्वाः सप्तसंख्यावाचिनः ।
॥ ६३ ॥

जलधरमाला । तल्लक्षणं यथा—

अब्ध्यष्टाभिर्जलधरमाला म्भौ स्मौ ।

यत्र पादेषु क्रमेण मगणभगणसगणमगणाः भवन्ति तत्र जलधरमालाभिधं छन्दः । अब्धयश्चत्वारः । चतुर्भिरष्टभिश्च यतिः ।

आत्मारामस्य श्रीरामस्य लोकजनन्यास्सीतायाश्च अवतारगतं सकलं कार्यजातं नटनमात्रमेव । अत एव सीताहरणं दुष्टवधकारणमभूदित्याश्रमे लक्ष्मणकृतं सीतात्यागं रामोऽभ्यनन्ददुत्तरत्र नटनार्थमरोदीच्च ॥ ६४ ॥

नवमालिनी । (नवमालिकेति वृ.र.) तल्लक्षणं यथा—

इह नवमालिका नजभयैः स्यात् ।

---

1 व्यलव (क) 2 राघव एष (क)

अधररसवशाद्रसाः साधिताः
कुचविहृतिवशाद्गजा नर्मदाः ।
तरुणि मुखवशात्प्रसूनं मया
सुरभितनुवशा[1]त्सुगन्धोऽप्यहो ॥ ६६ ॥

इति वनगोऽप्यहमाप्नुवं सुखं नगरभवं सति तावकाश्रयात् ।
भवनमभूद्वनमप्यहो ततो बहुशरदः क्षणभावमाश्रिताः ॥ ६७ ॥

क्षणोऽधुना युगति भास्करायते शशी शुकोऽपि बत
झिल्लिकायते ।
सुरेश्वरायुधति मन्दमारुतः कलेवरं सहज न प्रियायते ॥ ६८ ॥

---

यत्र क्रमेण पादेषु नगणजगणभगणयगणाः स्युः तत्र नवमालिनीति वृत्तम् । चतुर्भिरष्टभिश्च यतिः । ॥ ६५ ॥

प्रभा । तल्लक्षणं यथा–

स्वरशरविरतिर्नौ रौ प्रभा ।

यत्र क्रमेण पादेषु नगणद्वयं रगणद्वयं च भवति तत्र प्रभानामकं छन्दः । एतत्तु पूर्वोक्तप्रमुदितवदनावृत्तमेव । प्रमुदितवदनाख्ये यतिः पादान्तेऽत्र परं सप्तभिः पञ्चभिरिति विशेषः । स्वराः सप्त शराः पञ्च । ॥ ६६ ॥

माल्ती । तल्लक्षणं यथा–

भवति नजावथ माल्ती जरौ ।

यत्र पादेषु क्रमेण नगणो जगणद्वयं रगणश्चेति भवन्ति तत्र माल्तीनामकं वृत्तम् । पञ्चसु सप्तसु च यतिः । ॥ ६७ ॥

पञ्चचामरम् । तल्लक्षणं यथा–

---

[1] १सुगन्धीत्यहो (क)

**इति विलपन्निव राघव एषः स्मृतनिजपादजनापदरातिः ।**
**सहजयुतः खगभूरुहपूर्वान्निजरमणीमटति स्म सुपृच्छन् ॥६९॥**

—अतिजगतीप्रकरणम्—

**रघुपतिपृथिवीपुत्रिकासङ्गति–**
**स्तपनकिरणयोस्सङ्गतेः सन्निभा ।**
**विततिमुपगतौ तौ [1]नभोगावुतो**
**न हि भवति तयोस्तद्वियोगो ध्रुवम् ॥ ७० ॥**

---

जभौ जरौ वदति पञ्चचामरम् । (एतल्लक्षणलक्षितं पञ्चचामरं वृत्तं निर्णयसागरमुद्रितवृत्तरत्नाकर एव दृश्यते)

यत्र पादेषु क्रमेण जगणभगणजगणरगणाः भवन्ति तत्र पञ्चचामराख्यं वृत्तम् । पादान्ते यतिः । अस्यैव ललितपदमिति नामान्तरं वदन्ति प्राचीनाः । झिल्लिका कीटविशेषः । सुरेश्वरो इन्द्रस्तस्यायुधं वज्रम् । ॥ ६८ ॥

तामरसम् । तल्लक्षणं यथा–

अभिनवतामरसं नजजाद्यः । (अभिनवतामरसमिति वृत्तरत्नाकरः)

यत्र चरणेषु क्रमेण नगणो जगणद्वयं यगणश्चेति भवन्ति तत्राभिनवतामरसनामकं वृत्तम् । ॥ ७० ॥

क्षमा । तल्लक्षणं यथा–

तुरगरसयतिर्नौ ततौ गः क्षमा ।

---

1 नभ्यो वावृतो (क)

श्रीरामो वनभुवि सञ्चरन्नपश्यद्
गृध्रेन्द्रं स च जनकात्मजां निगद्य ।
श्रीरामं प्रति पिशिताशिराजनीतां
तत्पादं हृदि दधदत्यजत्स्वकायम् ।। ७१ ।।

जटायुषे सुगतिमदात्कोसलेन्द्र-
स्ततो वने सहजयुतोऽगात्कबन्धम् ।
गृहीतवान् सपदि स एतौ तदंतौ
न्यकृन्ततां भुजयुगलं तस्य रूक्षम् ।। ७२ ।।

---

यत्र पादेषु क्रमेण नगणद्वयं तगणद्वयं गुरुश्चान्ते भवन्ति तत्र क्षमाभिधं छन्दः । तुरगाः सूर्याश्वाः सप्त, रसाः षट् । एवं सप्तभिः षड्भिश्च यतिः ।

सूर्यकिरणयोरिव संयुक्तयोः द्वयोरपि दृश्यमानोऽयं वियोगः, न वियोगः तस्यासम्भाव्यत्वात् । अपि तु नभसि सूर्यकिरणानां व्याप्तिरिव एतावपि कार्यसिद्धयर्थं व्याप्तौ बभूवतुरिति तात्पर्यम् । ।। ७० ।।

प्रहर्षिणी । तल्लक्षणं यथा-

म्नौ ज्रौ गस्त्रिदशयतिः प्रशर्षिणीयम् ।

यत्र क्रणेण प्रतिचरणं मगणनगणजगणरगणाः गुरुश्चान्ते भवन्ति तत्र प्रहर्षिणीनामकं वृत्तम् । त्रिभिर्दशभिश्च यतिः । गृध्रेन्द्रो जटायुः ।
।। ७१ ।।

रुचिरा । (अतिरुचिरेति वृत्तरत्नाकरः । सेतुटीकायां रुचिरेति) तल्लक्षणं यथा-

अथ युवां काविति प्रश्नमेषोऽकरो-
द्रघुप एषोऽहमस्यानुजस्त्वं च कः ।
इति सुमित्रासुतेनेरितः सोऽगदी
द्दनुरहं शापतो रक्ष आसं प्रभो ॥ ७३ ॥

प्रसीद स्वामिन्मे राम देवेति [1]चोक्त्वा
तनुं तां त्यक्त्वाऽसौ दिव्यरूपो बभाषे ।
त्वदीयां शुश्रूषां तापनिः साञ्जनेयः
समर्थः कर्तुं तां प्राप्नुहीशेति भक्त्या ॥ ७४ ॥

---

चतुर्ग्रहैरतिरुचिरा जभस्जगाः ।

यत्र चरणेषु क्रमेण जगणभगणसगणजगणाः गुरुश्चान्ते भवन्ति तत्र (अति) रुचिरा छन्दः । ग्रहाः नव । चतुर्भिः नवभिश्च यतिः । अत्र चतुर्थजगणस्थाने रगण इति भेदो दृश्यते । ॥ ७२ ॥

[2]उर्वरी । एतद्वृत्तं वृत्तरत्नाकरे न लक्षितम् । यत्र क्रमेण नगणः तगणत्रयं गुरुश्चैको भवति तत्र उर्वरी वृत्तमिति अनेन लक्ष्येण ज्ञायते । ॥ ७३ ॥

[3]चञ्चरीकावली

तल्लक्षणं यथा–

यमौ रौ विख्याता चञ्चरीकावली गः ।

यत्र चरणेषु क्रमेण यगणमगणौ रगणद्वयं गुरुश्चेति भवन्ति तत्र चञ्चरीकावलीनामकं वृत्तम् ।

---

1 चोल्का (क) 2 उर्वशी (क) 3 च एवरीकावली (क)

एवं प्रोच्य स्वर्गमवाप्ते सुरभृत्ये
　काकुत्स्थोऽपि प्रास्थित मातङ्गनिवासम् ।
भक्त्या चीर्णां तत्र शबर्या परिचर्या-
　मादायास्यै लोकमदात्स्वं मुनिमान्यम् ॥ ७५ ॥

किष्किन्धाकण्डः

श्वसनात्मजद्युमणिसूनुपूर्वकै-
　र्युतमृष्यमूकमचलं व्यगाहत ।
सहसोदरो रघुवरोऽथ वानरा
　अवलोक्य तं तपनजादयोऽद्रवन् ॥ ७६ ॥

---

तापनिः सूर्यपुत्रः सुग्रीवः । उल्कातनुमिति पाठे स्वीकृते लक्ष्मणः रामाज्ञया महोल्काभिः गर्ते कबन्धं ददाह । तेन च प्राप्तपूर्वदेहः सः सीताप्राप्त्युपायं रामाय कथयित्वा निरगादिति वाल्मीकीये कथानुसन्धेया । तदा उक्त्वेत्यध्याहार्यम् । ॥ ७४ ॥

मत्तमयूरम् । तल्लक्षणं यथा-
वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ।

यत्र प्रतिचरणं क्रमेण मगणतगणयगणसगणाः गुरुश्चान्ते भवन्ति तत्र मत्तमयूरं छन्दः । वेदाः चत्वारः रन्ध्राणि द्वाराणि नव । चतुर्भिः नवभिश्च यतिः । सुरभृत्यः प्रसङ्गात्कबन्धभूतो दनुपुत्रः । ॥ ७५ ॥

मञ्जुभाषिणी । तल्लक्षणं यथा-
सजसा जगौ भवति मञ्जुभाषिणी ।

यत्र चरणेषु क्रमेण सगणजगणसगणजगणा गुरुश्चान्ते भवन्ति तत्र मञ्जुभाषिणीनाम वृत्तम् ।

त्यजत भयमतः प्रेष्ठतो दैवत-
स्तपनसुतमुखानित्थमुक्त्वा ततः ।
सुगुणगणमणिः प्राप्य रामान्तिकं
स्फुटमनमदमुं श्रीहनूमान्मुदा ॥ ७७ ॥

पदपङ्कजद्वितयपातिनमेनं
परिपूर्णभक्तिभरचोदितमीशः ।
हनुमन्तमेष रघराडुदहार्षी-
दरिचिह्नितेन करयोर्युगलेन ॥ ७८ ॥

---

स्वनिवासभूते ऋष्यमूकपर्वते मानुषागमनं वालिप्रयोजकं नूनं भवेदिति सुग्रीवादीनां दूरगमनकारणम् । ॥ ७६ ॥

चन्द्रिका । तल्लक्षणं यथा—

ननततगुरुभिश्चन्द्रिकाश्वर्तुभिः ।

यत्र चरणेषु क्रमेण नगणद्वयं तगणद्वयं गुरुश्चान्ते भवन्ति तत्र चन्द्रिकानामकं वृत्तम् । अश्वाः सूर्याश्वाः सप्त । सप्तसु चतुर्षु च यतिः । प्रेष्ठो महापुरुषो रामस्तस्माद्भयं त्यजतेति हनूमतो विवेकोक्तिः ॥ ७८॥

नन्दिनी । (अस्यैव कुटजकलहंसादि नामान्तराण्यपि दृश्यन्ते)

तल्लक्षणं यथा—

कुटजं वदन्ति कवयः सजसस्गैः ।

यत्र पादेषु क्रमेण सगणजगणसगणसगणगुरवः समापतन्ति तत्र नन्दिन्यभिधं वृत्तं भवति । (इदं लक्षणं जयकीर्तेः छन्दोनुशासनात्)

करयोररिचिह्नं किणादि, युद्धजनितम् । वीराणां शौर्यद्योतकमलङ्करणं तत् ।

—शकरीप्रकरणम्—

अन्योयं [1]प्रौढौ कृतबहुतमसंभाषौ
सन्तोषं प्राप्तौ रघुपतिहनुमन्तौ तौ ।
दुःसाधो लोके ननु शुभकरणः स्वामी
भृत्यो[3]ऽप्यासक्तो निजपरिवृढकार्येऽलम् ॥ ७९ ॥

अथ ससहजनिं रघूत्तममंसयो-
र्दधदयमगमत्पटुर्मरुदात्मजः ।
रविसुतनिकटं जगाद च तं सखे
शरणमिममिहि प्रपन्नजनाश्रयम् ॥ ८० ॥

---

असम्बाधा । तल्लक्षणं यथा—

म्तौ न्सौ गावक्षग्रहविरतिरसम्बाधा ।

यत्र पादेषु क्रमेण मगणतगणनगणसगणाः गुरुश्चान्ते भवन्ति तत्रासम्बाधावृत्तम् । अक्षम् इन्द्रियम् । बहुवचनात्पञ्चेन्द्रियाणि । ग्रहाः नव । पञ्चभिः सप्तभिश्च यतिः । दुःसाधः, ईषद्दुःसुषु इत्यादिना खल् । परिवृढः स्वामी यजमानः । स चात्र श्रीरामः ॥ ७९ ॥

अपराजिता । तल्लक्षणं यथा—

ननरसलगैः स्वरैरपराजिता ।

यत्र पादेषु क्रमेण नगणद्वयं, रगणसगणौ लघुगुरू चैते भवन्ति तदपराजितानामकं छन्दः । स्वराः सप्त । तेषु यतिः ।

---

1 प्रौढाभूत (क) 2 भृत्यो यातो (क)

दशरथसुत एष शुभगुणनिधि-
निधिमिव [1]धनहीन उपनतमिमम् ।
भज भव च सखास्य गृहविचयने
यदि मम वचनं हितमिति मनुषे ॥ ८१ ॥

इत्युक्त आशु तपनात्मज आननाम
श्रीराममस्मि तव दास इति प्रहृष्टः ।
तावाञ्जनेयवचसाऽथ मिथः प्रयातौ
सख्यं [2]पुरो हुतभुजो नरवानरेन्द्रौ ॥ ८२ ॥

---

वाल्मीकिरामायणे हनूमान् रामलक्ष्मणौ पृष्ठमारोप्य मलयपर्वतं नीतवानिति वर्तते । ॥ ८० ॥

प्रक(ह)रणकलिका । तल्लक्षणं यथा-

ननभनलघुगैः प्रहरणकलिका ।

यत्र पादेषु क्रमेण नगणद्वयं, भगणनगणौ लघुर्गुरुश्चेति भवन्ति तत्र प्रहरणकलिका छन्दः । सप्तभिः सप्तभिश्च यतिः । गृहविचयनं, गृहमार्गणम् । गृहशब्दः कलत्रं बोधयति । ॥ ८१ ॥

[3]वसन्ततिलका तल्लक्षणं यथा ।

उक्ता वसन्ततिलका तभजा जगौ गः ।

यत्र चरणेषु क्रमेण तगणभगणौ जगणद्वयं गुरुद्वयं चेति भवन्ति तत्र वसन्ततिलकानामकं छन्दः ।

---

1 धनहीनमुपनत (क) 2 पुरोद्गतभुजो (क) 3 सिंहोद्धता (फ)

तापनिसमर्पितमवेक्ष्य [1]रघुराजः
स्वात्मदयिताऽऽभरणमाप्त इव शोकम् ।
कुत्र बत भूमितनयाऽऽभरणमस्याः
शोकभरणं वितनुते[2] [तदिय] माख्या ॥ ८३ ॥

सुग्रीव प्रमदा मे युक्तागात्प्रमदेन
भ्रात्रा किं? सुखदं प्राक् जायाभूषणमासीत् ।
एतर्ह्यप्रियमासीत्को हेतुर्बत बुद्धं
जायाकायवियोगात्सा संज्ञान[3]मवाप्ता ॥ ८४ ॥

---

इन्दुवदना । तल्लक्षणं यथा–

इन्दुवदना भजसनैः सगुरुयुग्मैः । (छन्दोमञ्जरी)

यत्र पादेषु क्रमेण भगणजगणसगणनगणाः गुरुद्वयं चान्ते दृश्यन्ते तत्रेन्दुवदना छन्दः । ॥ ८३ ॥

अलोला । तल्लक्षणं यथा–

द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत् । (पिङ्गलः)

यत्र चरणेषु क्रमेण मगणसगणमगणभगणाः गुरुद्वयं च भवन्ति तत्रालोलाच्छन्दः । सप्तसु सप्तसु च यतिः । प्रमदेन भ्रात्रा बलिष्ठेन युक्ताऽपि अगात् किम्? अपहृता किमिति । पूर्वं जायाकायसंबन्धात् नेत्रानन्दकरं भूषणमिदानीमप्रियमभवत् । तत्र हेतुः तस्य जायकायवियोगः । एतस्य दर्शनेन सा पुनरपि बुद्धिस्थाऽभवदिति श्रीरामविलापः । अत्र 'संज्ञानमवाप्ता' इति युक्तं स्यादिति भाति । ॥ ८४ ॥

---

1 रघुरामः (क) 2 त्वदीय (क) तदीय (फ) 3 न्तमाप्ता (फ)

—अतिशक्करीप्रकरणम्—

इति बहु विलपति रघुकुलतिलके
विषमविषयकलुषितमतिमनुजान् ।
अनुसरति तपनसुत उरुविधया
किल शुचमशमयदतिसुखदगिरा ॥ ८५ ॥

न सृजति ननु शुभमशुभमपि कृतेः
फलमिह सुखमुखसुगुणमयतनौ ।
भवति जलमिव सरसिरुहदले
कृतिरियमकृतिरिति मतममलम् ॥ ८६ ॥

इति दिनपतिसुतवचन उरु मुदा
रघुकुलपतिरमुमवगवितथवाक् ।
वद सचिवतिलक निजमभिलषितं
झटिति तदहमथ शुभगुण विदधे ॥ ८७ ॥

---

शशिकला । तल्लक्षणं यथा—
द्विहतहयलघुरथ गिति शशिकला ।

यत्र पादेषु क्रमेण चतुर्दश लघवः अन्ते गुरुरेकश्च भवन्ति तत्र शशिकलानामकं छन्दः । चत्वारो नगणाः एको गुरुरिति वक्तव्ये एवं लक्षणमुक्तम् । द्विहताः द्विगुणिताः हयाः चतुर्दश । सप्तभिरष्टाभिश्च यतिः । ॥ ८५ ॥

स्रक् । तल्लक्षणं यथा—
स्रगिति भवति रसनवकयतिरियम् ।
शशिकलैवेयम् । षड्भिर्नवभिश्च यतिरत्र । ॥ ८६ ॥
मणिगणनिकरः (मणिगुणनिकरः वृ. र.)

गदित इति कपीशो वालिवैरस्य हेतुं
  स्फुटतममभिधाय प्राप्तमस्माच्च कष्टम् ।
जहि तमिति जगाद क्षिप्रमीशः प्रतिज्ञा-
  मतनुत शर एको दास्यतीष्टं तवेति ।। ८८ ।।

तदनु रघूत्तमस्तपनसूनुसंशयं
  बलिवरवालिसंहरणशक्तिगोचरम् ।
अपनयंस्तनुं गिरिनिभां च दुन्दुभेः
  क्षिपति पुरा पदाङ्गुलिविहारलेशतः ।। ८९ ।।

---

तल्लक्षणं यथा–

वसुहययतिरिह मणिगुणनिकरः ।

शशिकलैव यतिभेदान्नामान्तरमाप । वसवः अष्टौ । हयाः सप्त । अष्टसु सप्तसु च यतिः । ॥ ८७ ॥

मालिनी । तल्लक्षणं यथा–

ननमयययुतेयं मालिनी भोगिलोकैः ।

यत्र नगणद्वयं मगणः यगणद्वयं च भवति तत्र मालिनीनामकं छन्दः । भोगिनः अष्टौ । लोकाः सप्तः । तत्र यतिः । ॥ ८८ ॥

प्रभद्रकम् । तल्लक्षणं यथा–

भवति नजौ भजौ रसहितौ प्रभद्रकम् ।

यत्र पादेषु क्रमेण नगणजगणभगणजगणरगणाः भवन्ति तत्र प्रभद्रकमिति छन्दः । सप्तसु अष्टसु च यतिर्भवति । ॥ ८९ ॥

**शतयोजनं तनुरियमगमदथैला–**
**मभिनद्धहूनूहरवरहृतवधदैत्यान् ।**
**विवरे भुवः स्थितियुज उरुमदयुक्ता–**
**नपिषद्द्रुतं रघुकुलतिलकमहिम्ना ।। ९० ।।**
**मित्रेणाथापि शङ्काशङ्कूद्धृतौ सप्त तालान्**
**बाणेनैकेन भिन्द्धि स्वामिन्निति प्रार्थितस्सन् ।**
**अच्छेद्यान् दैत्यरूपान्वेधोवराद्बाणमेकं**
**मुक्त्वा पिष्टानकार्षीत् श्रीरामदेवो महात्मा ।। ९१ ।।**

—अष्टिप्रकरणम्—

**भूविवरं प्रविश्य स शरवर उरुरयो**
**ब्रह्मवरादमृत्युकुमुदिपदखलवुलम् ।**
**मारयति स्म रामकरमग (म) दपि ततो**
**नाशितसंशयश्च स दिनपतिजनिरभूत् ।। ९२ ।।**

---

एला । तल्लक्षणं यथा–

सजना नयौ शरदशयतिरियमेला ।

यत्र पादेषु क्रमेण सगणजगणौ नगणद्वयं यगणश्चान्ते भवतः सैला छन्दः । शराः पञ्च । पञ्चभिः दशभिश्च यतिः । ।। ९० ।।

चन्द्रलेखा । तल्लक्षणं यथा–

म्रौ म्यौ यान्तौ भवेतां सप्ताष्टकैश्चन्द्रलेखा ।

यत्र चरणेषु क्रमेण मगणरगणमगणयगणाः अन्ते पुनरेको यगण इति भवन्ति तत्र चन्द्रलेखानामकं छन्दः । सप्तसु अष्टसु च यतिः । वेधोवरः प्रसङ्गाद्धनुः । ।। ९१ ।।

ऋषभगजविलसितम् । तल्लक्षणं यथा–

---

1 हरवहृत (क) हवरहृत (फ)

अथ कपिराट् सहोदरपुरीं गतः सरामो
रवमकरोत्तदाऽ[1]द्रवदमुं बली स वाली ।
युदभवदेतयोरखिलविच्च नीतिदर्शी
न शरममुञ्चदीश इनजोऽद्रवत्स्ववासम् ॥ ९३ ॥

—अत्यष्टिप्रकरणम्—

सदृक्षाकारत्वात्तपनज विवेको न युवयो-
र्ममाभूत्तन्मुक्तो न शर इति रामेण गदितः ।
अथाभिज्ञानार्थं पवनसुतबद्धस्रगगम-
त्स वाली चायातः श्रुतरव इहासीद्युदनयोः ॥ ९४ ॥

---

भ्रत्रिनगैः स्वरात्खमृषभगजविलसितम् ।

यत्र चरणेषु क्रमेण भगणरगणौ नगणत्रयं गुरुश्चेति भवन्ति तत्रर्षभगजविलसितं नाम छन्दः । सप्तसु नवसु च यतिः । स्वराः सप्त । खं छिद्रं नवच्छिद्राणि द्वाराणि । प्रकरणादयमर्थः । कुमुदिनो नाम राक्षसाः, पातालवासिनः ब्रह्मणो वरेण मृत्युरहिता आसन् । ॥ ९२ ॥

वाणिनी । तल्लक्षणं यथा—

नजभजरैः यदा भवति वाणिनी गयुक्तैः ।

यत्र पादेषु नगणजगणभगणजगणरगणाः क्रमेण भवन्ति अन्ते चैको गुरुः तदा वाणिनीनामकं छन्दः । पादान्ते यतिः । युद् युद्धम् । श्रीरामस्य नीतिदर्शित्वं अखिलवित्त्वं च उत्तरत्र वक्ष्यते । ॥ ९३ ॥

शिखरिणी । तल्लक्षणं यथा—

रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी ।

---

1 इवदमुं (क)

समीपगमने व्रजेच्छरणमेष शक्रात्मज-
स्तदास्य न हि कीर्तिदा निहतिरित्यशेषाधिपः ।
शरेण तदगोचरस्तमवधीत् रघुनाथान्वय-
रघुनाथ इनजं व्यधान्नृपपदेऽभिषिक्तं ततः ॥ ९५ ॥

राघवकलापविग्रहगुणगणनिगमातिगं यं
वज्रधरोऽतुलं ससदृशं विरचयितुमिव ।
वासवचापवार्धरघनस्तनितभरयुतं
विष्णुपदं व्यधान्मृतजगत्प्रथितबलसुतः ॥ ९६ ॥

---

यत्र चरणेषु क्रमेण यगणमगणनगणसगणभगणाः लघुगुरू चान्ते भवन्ति तत्र शिखरिण्याख्यं छन्दो भवति । रसाः षट् रुद्रा एकादश । तेषु यतिः ।

विवेकः परस्परं भेदः । अभिज्ञानं परिचायकम् । श्रुतरवः युध्, महद्युद्धं, यथा प्रहारैः लोकाः इदमनयोरेव युद्धमिति जानीयुस्तथेति ॥ ९४ ॥

पृथ्वी । तल्लक्षणं यथा—
जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ।

यत्र चरणेषु क्रमेण जगणसगणजगणसगणयगणाः लघुगुरू चान्ते इति भवन्ति तत्र पृथ्वीवृत्तम् । वसवोऽष्टौ । ग्रहाः नव तत्र यतिः । [illegible] आलिङ्गन [illegible] । [illegible] ये [illegible]र्णानुसारि ॥ ९५ ॥

वंशपत्रपतितम् । तल्लक्षणं यथा—
दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ।

यत्र पादेषु क्रमेण भगणरगणनगणभगणनगणाः अन्ते लघुगुरू चेति भवन्ति तत्र वंशपत्रपतितं छन्दः । दिशो दश । मुनयः सप्त । तत्र

**शिखिसुखकरो वार्षः कालस्तिरस्कृततारक-**
**स्सुरततिमनस्तुष्टेर्हेतुः शुभौदनदानकृत् ।**
**गुहमतुलयत्तं काकुत्स्थः समीक्ष्य ससोदरो**
**न्यवसदचले नानामाल्ये स माल्यवदाह्वये ॥ ९७ ॥**

---

यतिः । मृतश्चासौ जगत्प्रथितबलश्चेति वाली । सः सुतोऽस्येति वज्रधरविशेषणम् । ॥ ९६ ॥

हरिणी । तल्लक्षणं यथा–

रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ।

यत्र पादेषु क्रमेण नगणसगणमगणरगणसगणाः लघुगुरू चान्ते भवन्ति तत्र हरिणीवृत्तम् । रसाः षट्, युगानि चत्वारि, हयाः सप्त । तेषु यतिः ।

वर्षाकालपक्षे–शिखिनां वृक्षाणां सुखकरः, मेघाच्छादिताकाशवत्त्वात् अदृष्टनक्षत्रः । सुरसङ्घस्य मनस्तुष्टिकारणः स च 'यज्ञाद्भवति पर्जन्यो पर्जन्यादन्नसम्भवः' इत्यादिवचनबलेन । पर्जन्यो धान्यसम्भूतेः कारण-भूतः, तेन च यज्ञादीनां निर्वर्तनम्, तत्र लब्धाभिराहुतिभिर्देवसङ्घस्य संतृप्तिः इति विधया प्रोक्तः । शुभौदनं मङ्गलकारकं भोजनम्, तस्य प्रयोजकोऽयं कालः । वृष्ट्या सकलविधधान्योत्पत्त्या शुभौदनदानकारी भवत्ययमिति ज्ञेयम् । अथवा ओदनो मेघः तद्दानकृदिति ।

स्कन्दपक्षे–कुमारवाहनभूतशिखिनः सुखकरः । विद्रावितताराकाख्या-सुरः । तारकमारणान्निर्भीतदेवसङ्घस्य मनस्तुष्टिकरः । शुभौदनदानकृत् स्कन्दः । मृष्टान्नदस्स इति प्रसिद्धिरस्ति । तथा च श्री सुब्रह्मण्यस्तोत्रे 'इष्टार्थदं भक्तजनस्य कामं मृष्टान्नदातारमुमेशसूनुम्' ।

स्तोत्रार्णवः । सम्पादकः टि. चन्द्रशेखरन्

॥ ९७ ॥

तत्रायातः शरदि हनुमान् राघवभ्रातृनुन्न–
स्सुग्रीवोऽसौ कपिबलयुतो राघवोऽपि प्रसन्नः ।
एतर्ह्यासीद्रविशशिपयोदिग्वनोद्देशवत्त–
द्युक्तं नूनं भजति सकलं कालसाम्यं जगत्याम् ॥ ९८ ॥

अथ तपनात्मजः कपिबलं प्रहिणोति पुरा
रघुपकलत्रमार्गणकृते प्रविभज्य ततः ।
रघुपतिरादिशत्पवनजं मम कार्यकृते
त्वमिहि धृतोर्मिको यमदिशं बलवन् हनुमन् ॥ ९९ ॥

इति रघुपोदितः पवनजो युवराजमुखैः
प्लवगवरैर्युतो विधिसुतेन च याम्यदिशम् ।
नतरघुनायकः करधृतोर्मिक ईशपद–
स्मरणतो गतः क्षितिसुतां लघु स व्यचिनोत् ॥ १०० ॥

---

मन्दाक्रान्ता । तल्लक्षणं यथा–

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ।

यत्र पादेषु क्रमेण मगणभगणनगणाः तगणद्वयं अन्ते गुरुद्वयं चेति स्युः तत्र मन्दाक्रान्तावृत्तम् । जलधयः चत्वारः । अगाः पर्वताः सप्त कुलाचला इति प्रसिद्धाः । तथा च चतुर्भिः, षड्भिः सप्तभिश्च यतिः ।
॥ ९८ ॥

नर्कुटकम् । तल्लक्षणं यथा–

हयदशभिर्नजौ भजजला गुरु नर्कुटकम् ।

यत्र चरणेषु क्रमेण नगणजगणभगणाः जगणद्वयं लघुगुरू चेति भवन्ति तत्र नर्कुटकवृत्तम् । हयाः सप्त । सप्तसु दशसु च यतिः । ऊर्मिका अङ्गुलीयकम् । यमदिक् दक्षिणाशा । ॥ ९९ ॥

कोकिलकम् । तल्लक्षणं यथा–

सुग्रीवादेशात्कपिवरगणा मासतः प्रागलङ्घ्या-
दप्राप्ताभीष्टा रविजनिकटं प्रागमन्नागमंश्च ।
वायूद्भूताद्याः, प्रययुरथ ते प्राप्तविंध्या गिरीन्द्रं
माहेन्द्रं चक्रुर्मतिमनशनं कर्तुमप्राप्तसीताः ।। १०१ ।।

राघवस्य सुचरितं कथयामासुश्च परस्परं
जीवगृध्रसुकृतदुष्कृतपक्षक्षयकारणम् ।
गृध्रराडिदमशृणोदथ सम्पातिर्गतपक्षकः
पक्षवानभवदहो तदिदं को नो शृणुयात्सुधीः ।। १०२ ।।

---

मुनिगुहकार्णवैः कृतवति वद कोकिलकम् ।

यत्र पादेषु क्रमेण नगणजगणभगणाः जगणद्वयं लघुगुरू चेति भवन्ति तत्र कोकिलकं छन्दः । मुनयः सप्त । गुहः षण्मुखः, तस्य कानि षण्मुखानि । अर्णवाः चत्वारः । एवं सप्तसु षट्सु चतुर्षु च यतिः ।

युवराजः वालिपुत्रोऽङ्गदः । विधिसुतो जाम्बवान् । स च ब्रह्मणः जृम्भया समुद्भूतः । ॥ १०० ॥

कुसुमितलतावेल्लिता । तल्लक्षणं यथा-

स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ न यौ यौ ।

यत्र चरणेषु क्रमेण मगणतगणनगणाः यगणत्रयं च भवन्ति तत्र कुसुमितलतावेल्लितानामकं छन्दः । भूतानि पञ्च, ऋतवः षट्, अश्वाः सप्त । तैश्च यतिर्भवति ।

दक्षिणां दिशं गतान् विहायान्ये सर्वेऽपि मासतः सुग्रीवनिकटं समागताः । हनूमदाद्यास्तु अविज्ञातसीतावृत्ताः माहेन्द्रमारुह्य राजाज्ञाभयेन प्रायोपवेशे मतिं चक्रुः । ॥ १०१ ॥

हरनर्तकम् । तल्लक्षणं यथा-

स च खगपतिरात्मपुत्राच्छ्रुतां जानकीदुर्दशां
  विदितकपिवराशयो द्राङ्निवेद्य स्वयं दूरदृक् ।
निशिचरपुरमार्ग[1]मित्याह सोऽवेत्य सीतास्थितिं
  स्फुटमपि समुदीर्य तुष्टानकार्षीत्कपीन्द्रान्मुदा ॥ १०३ ॥

जटायुर्ज्येष्ठेऽस्मिंस्तदनु हिमवत्पर्वतं प्राप्त एते
  कपीन्द्रा माहात्म्यं रविकुलरवेर्वर्णयन्तः प्रयाताः ।
पयोधिं याम्यायां हरिति लसितं नात्र साध्या क्रिया वो
  निरुन्धानं वेति प्रकटलहरीबाहुभिः प्रेक्ष्य भीताः ॥१०४॥

---

सौं जौं भरसंयुतौ करिबाणखं हरनर्तनम् ।

(वृत्तरत्नाकरस्थः क्वाचित्कः पाठः) परन्त्वेतल्लक्षणं अत्र न सङ्गच्छते। अस्मिन् श्लोके क्रमेण रगणनगणजगणयगणभगणरगणाः दृश्यन्ते ।

जीवभूतो यो गृध्रः तस्य सुकृतकारणं दुष्कृतपक्षस्य रावणपक्षस्य प्रक्षय-कारणं च राघवस्य तत्सुचरितमित्यर्थः । ॥ १०२ ॥

निशा । तल्लक्षणं यथा छन्दोमञ्जर्याम्—

इह ननरचतुष्कसृष्टं तु नाराचमाचक्षते ।

नाराचस्यैव निशेति नामान्तरम् ।

यत्र नगणद्वयं रगणचतुष्टयं च क्रमेण चरणेषु भवति तत्र निशानामकं छन्दः । वृत्तरत्नाकरे धृतिविभागे एतन्न दृश्यते ।

खगपतिः सम्पातिः तस्य पुत्रः सुपार्श्वः । ॥ १०३ ॥

मेघविस्फूर्जिता । तल्लक्षणं यथा—

रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात् ।

---

1 मित्यासहापेत्य (क)

—अतिधृतिप्रकरणम्—

सर्वे ते सुविचार्य कार्यकरणे शक्तेरियत्तां मिथो
निश्चिक्युर्न हि शक्नुमो वयमिति प्रोचेऽप्यथो जाम्बवान् ।
श्रीमान्मारुतिरेव कार्यचतुरो नूनं कपीन्द्रा इति
[1]प्रोवाचापि मरुत्सुतं स शनकैरेकान्तदेशे स्थितम् ॥१०५॥

—कृतिप्रकरणम्—

न ब्रूषे श्रीहनूमन्किमपि किमिति नो [2]भीदुःखहुतभुक्
क्रान्तान्नः पालय त्वं हितवचनसुधावृष्ट्या कुरु दयाम् ।
यस्त्वं बाल्ये रघुनाथं ग्रसितु[3]मभिगतं राहुं च रविभा-
रक्तं व्यद्रावयस्ते न किमपि भुवनेऽसाध्यं जय सखे ॥१०६॥

---

यत्र पादेषु क्रमेण यगणमगणनगणसगणाः रगणद्वयं गुरुश्चान्ते भवन्ति तत्र मेघविस्फूर्जितावृत्तम् । रसाः षट्, ऋतवः षट्, अश्वाः सूर्याश्वाः सप्त, तत्र यतिः । जटायुः ज्येष्ठः अस्येति सम्पातिः । रविकुलं सूर्यवंशः तत्र रविः, ग्रहेषु रविरिव प्रधानभूतः श्रीरामः । याम्या हरित् दक्षिणा दिक् । अत्र युष्माकं लङ्घनं तरणं वा असाध्यं इति प्रकटितलहरीबाहुभिः निरुन्धानं इव स्थितं प्रेक्ष्य भीताः हनूमदाद्या इति यावत् ॥ १०४ ॥

शार्दूलविक्रीडितम् । तल्लक्षणं यथा—

सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ।

यत्र चरणेषु क्रमेण मगणसगणजगणसगणाः तगणद्वयं गुरुश्चान्ते भवन्ति तत्र शार्दूलविक्रीडितं नाम छन्दः । सूर्या द्वादश, अश्वाः सप्त, तत्र यतिः । कार्यशक्ता बहुत्र मुखरा न भवन्ति । ॥ १०५ ॥

सुवदना । तल्लक्षणं यथा—

ज्ञेयाः सप्ताश्वषड्भिर्मरभनययुताः भ्लौ गः सुवदना ।

---

1 प्रोवाचाथ (क)  2 भीदुःखद्रुतभुक्त्वातान्नः (क)  3 मुपगत (क)

इति वेधस्तनुजेरितः पवनजः सन्तोषयन् वानरा-
नभिधायास्तु तथेत्यवर्धत तदा माहेन्द्रपृथ्वीभरे ।
अनलो वा भुवनं दिधक्षुरभवन् धूमोपमाश्चाम्बुदा
गिरिमापीड्य पदद्वयेन जलधिं रामं स्मरन् पुप्लुवे ॥१०७॥

सुन्दरकाण्डः

एष भूधरस्तदा चलन्नुपाब्धि नौमतेः पदं बभूव
वायुसूनुरप्यशङ्कि किं त्रिविक्रमोऽयमित्यहो विलोक्य ।
विक्रमन्तमेनमन्तरिक्षगैर्निपातितं विशालमान-
वस्त्रमित्यबोधि वार्धिरस्य वेगतोऽनुयानकृज्जवेन ॥ १०८ ॥

---

यत्र क्रमेण चरणेषु मगणरगणभगणनगणयगणभगणाः लघुर्गुरुश्चान्ते भवन्ति तत्र सुवदनानामकं छन्दः । सप्तसु पुनः सप्तसु तथा षट्सु च यतिः ।

हनूमान् बाल्ये सूर्यं फलमिति मत्वा जिघृक्षुस्तमभ्युद्गत इत्येतावन्मात्रं वाल्मीकिरामायणे दृश्यते । सूर्यं ग्रसितुमुपक्रामन्तं राहुं हनूमान् व्यद्रावयदिति कथा पद्मपुराणे दृश्यते । **प. पु. पातालखण्डः अध्यायः ११४**
॥ १०६ ॥

मत्तेभविक्रीडितम् । तल्लक्षणं यथा–

सभरा न्म्या लगिति त्रयोदशयतिर्मत्तेभविक्रीडितम् ।

(जयदाम्नि सविमर्शं संपादिते वृत्तरत्नाकरे एतल्लक्षणं दृश्यते)

यत्र क्रमेण चरणेषु सगणभगणरगणनगणमगणयगणाः लघुर्गुरुश्चान्ते भवन्ति तत्र मत्तेभविक्रीडितं नाम छन्दः । त्रयोदशाक्षरे यतिः । वेधस्तनुजो जाम्बवान् । महति वक्त्रे विदीर्णे सति हनूमान् अनलसदृशोऽदृश्यत । महता कृष्णेन वपुषा मेघसदृशोऽपि विभावितः ॥ १०७ ॥

वृत्तम् । तल्लक्षणं यथा–

श्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तनाम ।

—प्रकृतिप्रकरणम्—

आश्लिष्याथो गिरीन्द्रं कनकमयमयं वारिधेरूर्ध्वमाप्तं
विश्रान्त्यै स्वस्य पित्रा क्षितिधररिपुतः पालितं श्रान्तिदूरः।
धावन्नाकीन्द्रनुन्नद्विरसनजननीवक्त्रमाकाशतुल्यं
शीघ्रेणाविश्य भूत्वा प्रतनुतनुरितो निर्गतः पुप्लुवेऽसौ
॥ १०९ ॥

—आकृतिप्रकरणम्—

वानरराण्नराशिवसतेस्ततो विधिवराद्गिमृत्युमवने
शक्तिमतीं भयानकमुखीं प्रविश्य लघु सिंहिकां पटुतमः।
तत्प्रतिरुद्धशीघ्रगमनो विदार्य हृदयं नखैः खरतरैः
निर्गत अन्त्रवृन्दलसितो नृसिंह इव पुप्लुवे सुरनुतः ॥११०॥

---

यत्र पादेषु क्रमेण त्रिवारं रगणजगणयोरावृत्तिः अन्ते च गुरुलघुनिवेशस्तत्र वृत्तनामकं वृत्तं भवति।

नौ इति बुद्धेः पदं स्थानं, चलन् पर्वतः समुद्रतीरे नौरिव अदृश्यत। ॥ १०८ ॥

स्रग्धरा। तल्लक्षणं यथा—

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।

यत्र पादेषु क्रमेण मगणरगणभगणनगणाः यगणत्रयमिति भवन्ति तत्र स्रग्धरानामकं छन्दः। मुनयः सप्तर्षयः। सप्तसु सप्तसु यतिक्रमः। कनकमयो गिरीन्द्रः हिरण्यनाभ इति ख्यातः मैनाकः। इन्द्रभयार्दितं तं पूर्वं वायू ररक्ष। नाकीन्द्राः सिद्धगन्धर्वदेवादयः। नुन्ना प्रेरिता। तैः हनूमद्बलपरीक्षणार्थं प्रेषिता सुरसा नाम्नी नागानां जननी ॥ १०९ ॥

भद्रकम्[1] तल्लक्षणं यथा—

---

1 प्रभद्रकम् (क)

—विकृतिप्रकरणम्—

द्रुतमिति लङ्घिताम्बुधिरयं प्रलम्बशिखरादचलम्बधरणी-
भृति निपपात भानुरविशत्ततोऽम्बुनिधिमात्मवंशजमणेः ।
अनुचरपुङ्गवस्य भवितुं सहाय इव वायुजोऽप्यथ गत-
स्तनुतनुतां पुरीमनुविशन्ददर्श सपदि स्त्रियं पुरमयीम्
॥ १११ ॥

---

म्नौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिति ।

यत्र चरणेषु क्रमेण भगणरगणनगणरगणनगणरगणनगणाः गुरुश्चान्ते भवन्ति तत्र भद्रकनामकं छन्दः । दिशो दश, अर्काः द्वादश, तत्र यतिः । विधेः वरात् हनूमताऽन्यत्र मृत्युरहितां नराशिवसतेः लङ्काया अवने शक्तिमतीं इति ज्ञेयम् । ॥ ११० ॥

अश्वललितम् । तल्लक्षणं यथा—

यदिह नजौ भजौ भजभलगास्तदश्वललितं हरार्कयतिमत् ।

यत्र चरणेषु क्रमेण नगणजगणभगणजगणभगणजगणभगणाः लघुर्गुरुश्चान्ते भवन्ति तत्राश्वललितं छन्दः । हराः एकादश, अर्काः द्वादश, तत्र यतिः ।

प्रलम्बेत्यादि । तुङ्गतुङ्गतरशिखरयुक्ते लम्बनामके पर्वत इत्यर्थः । आत्मवंशजमणेः सूर्यवंशशिखामणेः रामस्य योऽनुचरः हनूमान् तस्य साहाय्यं कर्तुकाम इव, भानुरस्तमविशत् । रात्रौ निशाचरमुखं परिहरन् यथा सीतामार्गणं सुकरं भवेत्, तदर्थमेव त्रिविक्रमसदृशो बिडाल इव तनुतरो बभूव । पुरमयी स्त्री लङ्कैव । कामरूपधरा रावणाज्ञाकारिणी सा ॥ १११ ॥

लब्धानां तां जित्वा प्रौढः पुरमविशदयमथ तदनुमतिभा
गैर्ग्रानीतो दीपो वास्मै हिमकिरण उदयमित उदयगिरेः ।
अन्विष्यास्यां पुर्यामन्तर्बहिरपि च पवनवदविहतगतिः
सीतां, चाशोकारामं स्वं श्रममखिलमपगमयितुमिव गतः
॥ ११२ ॥

—सङ्कृतिप्रकरणम्—

पूगैरसाढ्यैरपि सुरभिफलैर्नन्दमरुद्भिरतिमुदालिर्गतैः
पञ्चहृषीक्यारतिशुगपगतीकुर्वति सार्थकतमपदयुक्ते ।
तत्र हनूमान् रघुपतिदयितां वीक्ष्य कृतप्रणतिरदिशदस्यै
सोर्मिकमीशप्रियवचनसुधां मौलिमणिं जगृह इत उदारः
॥ ११३ ॥

---

मत्ताक्रीडा । तल्लक्षणं यथा–

मत्ताक्रीडा मौ त्नौ नौ न्लौ गिति भवति वसुशरदशयतियुता ।

यत्र चरणेषु क्रमेण मगणद्वयं तगणः नगणत्रयं लघुर्गुरुश्चेति भवन्ति तत्र मत्ताक्रीडानामकं वृत्तम् । वसवः अष्टौ, शराः कामशराः पञ्च । तथा दश । तत्र यतिः । तदनुमतिभागिति । पराजितया लङ्कया हनूमतः पुरप्रवेशनेऽनुमतिः प्रदत्ता । वानरकृतलङ्कादेवताविजयान्तमेव राक्षसक्षेममिति विधातुः वरो ह्यासीत् । ॥ ११२ ॥

तन्वी । तल्लक्षणं यथा–

भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी ।

यत्र पादेषु क्रमेण भगणतगणनगणसगणाः भगणद्वयं नगणो यगणश्चेति भवन्ति तत्र तन्वीनामकं वृत्तम् । भूतानि पञ्च । मुनयः सप्त । इनाः सूर्याः द्वादश, तत्र यतिः ।

—अतिकृतिप्रकरणम्—

राघवभक्तोऽशोकमसोढा मनुकुलमणिरिपुगणमिव निकषा
तद्वनमध्यं क्षिप्रमपास्यद्रघुपतिपदमिह दुरितगणमिव ।
केसरिनादं केसरिसूनुर्विदधदुत कदनमसममभिलषं–
[1]स्तोरणमेष समारुहतीमं [2]न्यरुणदुपगमितमुरबलमरिणा
॥ ११४ ॥

—उत्कृतिप्रकरणम्—

तत्सैन्याख्यं गाढं ध्वान्तं पवनजरविकरकिरणैर्विनाशमगात् क्षणा
दन्येऽप्येनं प्राप्ता नष्टास्तलपदनखनिनदमुखैः पलाशि-
गणोत्तमाः ।
पौलस्त्योक्तः पुत्रोऽक्षोऽथ श्रितरथ इममुपगतवान् ववर्ष शरावलीं
दीव्यन्नक्षेणायं भूमाविदमहितमिति धृतमना इवैनमताडयत्
॥ ११५ ॥

---

अत्र पूर्णरसाढ्यैरित्यादिना क्रमेण जिह्वाघ्राणत्वक्श्रवणानां सन्तोष-जनकत्वं अशोकवने वर्णयित्वा नयनेन्द्रियस्य सन्तोषजनकत्वं सीतादर्शनमेवेति कवेः चातुर्योक्तिः उल्लेखनीया । ॥११३॥

क्रौञ्चपदा । तल्लक्षणं यथा–

क्रौञ्चपदा भ्मौ स्भौ ननना न्गाविषुशरवसुमुनिविरतिरिह भवेत् ।

यत्र चरणेषु क्रमेण भगणमगणसगणभगणाः नगणचतुष्टयं गुरुश्चान्ते भवन्ति तत्र क्रौञ्चपदानामकं छन्दः । इषवः पञ्च । शराः पञ्च । वसवोऽष्टौ । मुनयः सप्त । तत्र यतिः ।

सुमेरोः राज्ञा केसरिणा, गोतमकन्यायां अञ्जनायां वायुदैवतप्रसादेन चैत्रशुक्लपौर्णमास्यां सञ्जातो हनूमान् केसरिसूनुरिति ख्यातः ॥ ११४ ॥

भुजङ्गविजृम्भितम् । तल्लक्षणं यथा–

---

1 स्तोवण (क) 2 न्मरुण (क)

अयातस्तदनु जनकवचनत इममनिमिषपतिजिदवर्षद्द्रा-
ग्बाणौघान् कपिरतनुत वियदुपगत उरुनिजतनुगतिहीनांस्तान् ।
ब्रह्मास्त्रेण वशमकृत निशिचरसुत उत सद इममनयन्दुष्टा
बद्ध्वा दामभिरपि, बलजलनिधिरिह हरिरभिमतिमकरो-
त्स्वार्थाद् ॥ ११६ ॥

—दण्डकप्रकरणम्—(समवृत्तरूपदण्डकः)

प्लवग भवसि कः, कुतश्चागतः, कः पतिः, क्व स्थितिः, किंफलं चापलं, ब्रूह्यलं
सुरपतिनुतिगोचरान्मत्करान्नैव जानासि जातोऽधमस्तेऽस्मः किं भ्रमः ।
इति गदति दशानने दुर्जने मारुतिः सन्मतिः स्माह तं सस्मितं मारुतं
जनमिमनवनीश जानीह्यजादीडितं संश्रितं राघवं सौरवंशो-
द्भवम् ॥ ११७ ॥

---

वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम् ।

यत्र पादेषु क्रमेण मगणद्वयं, तगणः, नगणत्रयं, रगणः सगणः लघुर्गुरुरिति भवन्ति तत्र भुजङ्गविजृम्भितम् । वसवोऽष्टौ । ईशाः एकादश, अश्वाः सूर्याश्वाः सप्त । तत्र यतिः ।

भूमावस्य ताडनं दुःशकमिति आकाशयुद्धमकरोत्तेन साकं मारुतिस्तथा तत्रैनं जघान । अक्षदेवनं भूमौ निषिद्धमिति च भावनया ॥ ११५ ॥

अपवाहम् । तल्लक्षणं यथा—

मो नाः षट् सगागिति यदि, नवरसरसशरयतियुतमपवाहाख्यम् ।

यत्र चरणेषु क्रमेण मगणः, नगणषट्कं सगणो गुरुद्वयं च भवति तत्राप वाहाख्यं वृत्तम् । नवसु, षट्सु, पुनःषट्सु तथा पञ्चसु यतिर्भवति । अनिमिष-पतिरिन्द्रः। सद् , सभा। हनूमतः स्वार्थः रावणदर्शनं तेन सह संवादश्च ॥११६॥

चण्डवृष्टिप्रपातदण्डकः । तल्लक्षणं यथा—

भुवनवितत इन्दिरासत्करालिङ्गितः संनुतश्चक्रपाणिः कृपासंभृतः क्ष्मां गतः
श्रुतमिति ननु स ह्ययं वागियं नो मृषा तद्रुषा सङ्गतः कुत्सितः प्रक्षयस्याश्रयः ।
दशक सनति भूसुता सुस्मिता दीयते चेन्न ते प्रक्षतिः क्षाम्यति क्ष्मेश्वराग्रेसरः
सलिलभवभवास्त्रकं वन्धकं नैव मे राममेतं श्रितोऽहं यतो मुख्यया सेवया ॥ ११८ ॥

अहमिह तव दर्शनायाधुना कामतश्चागतस्त्वं वृथा मा कृथाः पुत्रकेऽत्यल्पके सत्कृतिं
ननु कृतमपि चापलं [1]निष्फलं वानरे भाति रे रावणा[2]त्युद्वण त्वन्न भीर्मे [3]श्वभीर्वा हरेः ।
अलमलमहमद्वितीयोऽप्यतीवोद्धताश्चाहित नू हन्तु,[4]मेतन्न मे रोचते मत्पतेः सद्यशः
समभिलषितमूर्जिते दैवते राघवे साहवे जीवितेच्छा तु ते स्याद्वृथा, सर्वथा नान्यथा ॥ ११९ ॥

---

यदिह नयुगलं ततः सप्त रेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ।

यत्र पादे नगणयुगलं रगणसप्तकं च क्रमेण भवेत् तत्र चण्डवृष्टिप्रपाताख्यो दण्डकः । ॥ ११७ ॥

अर्णदण्डकः । तल्लक्षणं यथा—

प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामसंख्यादयः ।
यत्र पादे नगणयुगलं रगणाष्टकं च क्रमेण भवेत् तत्रार्णाख्यो दण्डकः । सलिलभवं, कमलं तत्र भवो ब्रह्मा । ब्रह्मास्त्रमित्यर्थः । ॥ ११८ ॥

अर्णवदण्डकः । लक्षणं पूर्वोक्तम् ।

---

1 निष्फले (क) 2 त्युल्बण (क) 3 श्वभि (क) 4 मेतन्नु (क)

**इति गदति मरुत्सुते कोपवान् प्रोक्तवान् राक्षसान् राक्षसाधीश्वरो**
**वानरो हन्यतामित्ययं दूतसं-**
**हृतिरसमुचिता ततः पुच्छमोषाम वीरेति वाणीं निजभ्रातु-**
**राकर्ण्य तत्कर्तुमाज्ञापयत्सत्वरम् ।**
**खरतरनिशिचारिणो भूयसा वाससाऽऽवेष्ट्य तत्पुच्छमत्रानलं**
**ज्वालयामासुरेनं ज्वलन्पावको**
**न हि दहति पुरा यतो मारुतोऽयं स्वयं तत्सखस्तत्र तत्रोप-**
**नीतोऽथ बन्धोज्झितस्तां पुरीं दग्धवान् ॥ १२० ॥**

---

यत्र पादेषु क्रमेण नगणद्वयं रगणनवकं च भवति तत्रार्णवदण्डकः ।

कामत इति । कामस्तु हनूमतः रावणवैभवदर्शनम् । पुत्रकेऽल्प-लके इन्द्रजिति सत्कारं मा कुरु । स तु हीनः कथं मां बध्नीयादिति । अभीरिति । स्वभावतः कपीनां अभिर्भयमस्त्येव । अभिर्हीरिति वा । मम तु भवाद्दर्शनैर्भीतिरिति गर्वोक्तिः । ॥ ११९ ॥

व्यालदण्डकः । लक्षणं पूर्वोक्तम् ।

यत्र नगणद्वयं रगणदशकं च पादेषु क्रमेण भवति तत्र व्यालदण्डकः । उष धातुः दाहार्थे वर्तते । निजभ्राता विभीषणः । भूयसा वाससा वस्त्रसञ्चयैरित्यर्थः । अयं मारुतः, मरुतस्सम्बन्धी, पुत्रः हनूमान् । अग्निः वायुसखः । अत एव सख्युः पुत्रस्य पीडाकरे वालदाहादिके कर्मणि अग्निः अनुकूलो न बभूव । ॥ १२० ॥

गिरिवरसमदेहभाक् वालगं पालकं प्रक्षिपंस्तत्र तत्रोत्पतंस्तां पुरीं
सत्सभागोपुरां [1]सौधसद्मान्विता—
मदहदखिलहृत्पुरीर्हा पते हा पितर्हा सखे हा सुता हा हताः
स्मो वयं पापिनं रावणं हा वृथा संश्रिताः ।
इति निजपरिदेवनाख्यानलोप्येवमन्तर्बहिर्दाहमाप्ता मनुष्या-
शिलोका, इदं साम्प्रतं राघवे तत्प्रिये
हनुमति च कृतागसा राक्षसस्वामिना सङ्गतानां ननु, क्ष्मासुतां
सम्प्रणम्याथ पाथोनिधिं पूर्ववत्तीर्णवान् ॥ १२१ ॥

गतनिजनिकटं ततो मारुतिं जाम्बवत्संयुता वानरा वीक्ष्य
चिन्ताम्बुधेरुद्गताः पूर्णमोदाम्बुधौ मज्जनं चक्रिरे ।
फलकुसुममुखैरमुं पूजयाञ्चक्रिरे ज्ञातवार्ता अलं नेदुरुन्नम्र-
पुच्छास्तथोत्पेतुरत्यन्तमस्य स्तुतिं चक्रिरे ।
प्रययुरथ निपीय ते सन्मधु स्वाधिपारण्यगं [2]मोदमत्ता रवेः
सूनुना सेवितं, सानुजं रामचन्द्रं मरुत्सूनुना
सह सविनयमानमन् राघवोऽपि प्रहृष्टो निजे पद्द्वये न्यस्य
चूडामणिं सन्नमन्तं हनूमन्तमुत्थाप्य चाश्लिष्टवान् ॥१२२॥

---

जीमूतदण्डकः । लक्षणं पूर्वोक्तम् ।

यत्र पादेषु क्रमशः नगणयुगलं रगणैकादशकं च भवति तत्र जीमूत-दण्डकः । सौधः प्रासादः, राजसदनम् । सद्म, गृहम् । अखिलहृत्पुरीः हृदयनगरीरदहदिति । इदं साम्प्रतमेतद्युक्तमिति । आगोऽपराधः । क्ष्मासुता सीता । पूर्ववत्तीर्णवानिति यत्नं विनैवेति ज्ञेयम् ॥ १२१ ॥

लीलाकरदण्डकः । लक्षणं पूर्वोक्तम् ।

---

1 सौधरूप्तान्वितां (क) 2 मोदरत्ता (क)

युद्धकाण्डः

[1]रघुपतिरथ सङ्कथय्यामुना, मन्त्रयित्वा समं तिग्मगोः सूनुना,
सेनया चाग्ययाऽऽरूढवान् वायुजं वालिजारूढसौमित्रिणा ।
सदृशरहितबाणकोदण्डपाणिः प्रतस्थे दिशं दक्षिणां कुर्वतो
राक्षसेन्द्रान्धकारक्षयं गोगणैर्निर्गतैर्द्राक् धनुर्मण्डलात् ।
उदयनिभमरुत्सुतेन्द्रात्मजप्रोद्भवारोहणं सूर्यवंशद्युमण्यो–
रतीवोचितं द्याक्षवान् दक्षिणाम्भोनिधेस्तीरमीशोऽम्बुधेः ।
सरणिमभिलषन्निहाशेत रक्षःपतेः सोदरो रामभक्तोऽग्रज–
प्रोक्तवाग्बाणतान्तस्तदा राघवं प्राप्य मां पालयेत्यब्रवीत्
॥ १२३ ॥

---

यत्र पादेषु क्रमशः नगणयुगलं रगणद्वादशकं च भवति तत्र लीलाकर-दण्डकः । हनूमद्दर्शनेन हृष्टानां वानराणां, हनूमत्स्तोत्रपर्यन्तं वर्णिता क्रिया नितरां समीचीना । प्रथमं पूजकस्य स्नानम् । अनन्तरं पूजनम् । ततःस्तुतिः । ततः प्रसादस्वीकृतिः । एवमत्रापि मारुतेर्दर्शनोत्तर-कालिकाः सदाचारक्रिया इव वर्णिताः कवेश्चमत्कृतिं सूचयन्ति । सन्नमन्त-मित्यनेन साष्टाङ्गप्रणामो निर्दिष्टः । मधुवनं नाम किष्किन्धाधीशितुः सुग्रीवस्य वनम् । स्वात्मदानादृते श्रेष्ठं अन्यत्किमपि लोके भक्ताय भगवद्देयं नास्ति । अतः भगवता श्रीरामेण हनुमते दत्त आश्लेषः परिपूर्णोऽनुग्रहः । ॥ १२२ ॥

उद्दामदण्डकः । लक्षणं पूर्वोक्तम् ।

---

1 रघुपतिरपि (क)

रिपुसहजनिरेष नो ग्राह्य [1]इत्यब्जजापत्यपूर्वोदितोऽपीश्वर-
श्शुद्धधीरेष ते ग्राह्य इत्यञ्जनासूनुनोक्तः पदाब्जे नतं तत्क्षणे
समतनुत विभीषणं साभिषेकं निशाचारिराज्येऽतिवीरोऽतियाते
निशानां त्रयेऽप्यब्धये स्वामियानोज्झिता[2]याथ सङ्क्रुद्ध
आदत्तवान् ।
शरवरधनुषी, पुनः कर्षतोऽ[3]स्योद्धणं सायकं रक्तनेत्रान्तवह्न्य-
र्चिषालीढ एषोऽम्बुधिः शोषमाप्तो भ्रमन्नक्रचक्राधिरूढार्हणो
धृतनिजशुभरूपको राममागत्य नत्वावदद्राघव त्वद्यशःस्फूर्तये
बध्यतां वीर सेतुर्मयीशाश्रितान्मां शरस्तेऽसुरान् हन्त्वयम्
॥ १२४ ॥

---

यत्र पादेषु क्रमेण नगणद्वयं रगणत्रयोदशकं च भवति तत्रोद्दामदण्डको भवति । सङ्कथय्य, संभाष्य । तिग्मगुः सूर्यः । अग्र्या, प्रधाना, पुरोगामिनी । राक्षसेन्द्रो रावणः स एवान्धकारः । तस्य क्षये निर्गतैः, गोमणैः किरणसमूहैरिति । राक्षसेन्द्रान्धकारक्षयं कुर्वतः धनुर्मण्डलादित्यन्वयः । उदयनिभ इति । उदयगिरिनिभ इति भाव्यम् । मरुत्सुतो हनूमान् । इन्द्रात्मजप्रोद्भवोऽङ्गदः । सरणिः मार्गः । तान्तः खिन्नः ।
॥ १२३ ॥

शङ्खदण्डकः । लक्षणं पूर्वोक्तम् ।

यत्र पादे नगणद्वयं रगणचतुर्दशकं च भवति तत्र शङ्खदण्डकः । अब्जं कमलं, तज्जो ब्रह्मा, तस्यात्मजो जाम्बवान् तत्प्रभृतिभिरुदित उक्तः । मामाश्रिताः समुद्रोत्तरे द्रुमकुल्ये स्थिताः पापा आमीरप्रमुखाः । तान् कृष्टः एष शरः हन्तु इति समुद्रप्रार्थना । ॥ १२४ ॥

---

1 इत्यम्बु (क)　2 याभि (क)　3 स्योल्बगं (क)

इति सनुति पयोधिना प्रार्थितो राघवः सुप्रसन्नः खलानब्धिगा-
[1]न्पत्रिणाऽमारयत्तेन तच्चाकरोदूषरं सुस्थलीमादिशद्विश्वकर्मोद्भवं
नलमथ जलधौ विधातुं द्रुतं सेतुमेषोऽकरोद्वानरेन्द्राहृतै[2]र्गण्डशैलैः-
सुशैलैः ससालैश्च पञ्चाहतः, सेतुरेषोऽभवद्गौणमार्गः पुरः ।
निशिचरनिचयेशितुर्दैवताधीशितुर्मुख्यमार्गः पुरः केवलं दर्शना-
दस्य हि प्राप्यते सा तथास्याम्बुधेर्वा [3]बभूवाशुभाब्धेश्च सेतुस्त्रसा
विह कुशलकृतक्रियैकाप्यनेकार्थकृन्नूनमीशस्ततः सानुगः सेतु-
नानेन लङ्कां प्रतस्थे तदा रामसम्पर्कतः सैन्यभासा जिता वार्धिभाः
॥ १२५ ॥

---

प्लवगदण्डकः । लक्षणं पूर्वमेवोक्तम् ।

यत्र पादेषु क्रमेण नगणद्वयं रगणपञ्चदशकं च भवति तत्र प्लवग-
दण्डकः ।

सनुतिस्तोत्रसहितं । पत्रं पक्षः विद्यतेऽस्येति बाणः ।
ऊषरं सुस्थलीमकरोत् क्षारभूमिं सुभूमिमकरोदिति । नलः विश्वकर्मणः सुतः ।
गण्डशैलाः भूकम्पादिना भग्नाः महान्तः शैलखण्डाः । पञ्चाहतः
पञ्चदिवसैरिति । रावणस्य पुरः लङ्कायाः एष सेतुः गौणमार्गः । परन्तु
भगवतो विष्णोः पुरो वैकुण्ठस्य एष मुख्यमार्गः । यतः वैकुण्ठावाप्तौ
सेतुदर्शनं प्रधानकारणं भवति । सा पूः केवलं अस्य दर्शनात्प्राप्यते हीति ।
अतः एक एव सेतुः पापाब्धेस्तरणे लङ्काप्राप्तौ च कारणमभूत् ।
कुशलकृतानां क्रियाणां सदानेकप्रयोजनवत्वं प्रसिद्धं खलु । ॥ १२५ ॥

---

1 न्यत्रिणा (क)   2 गण्डशूलैः (क)   3 शुभाब्धेश्च सेतुः (क)

अविशदपि [1]रघुवर्योऽर्यवार्योऽथ लङ्कामशङ्कात्मसैन्येन धन्येनसाकं
धृतवरशर[2]शरासः सुहासः प्रयाते स्वदूतेऽङ्गदाख्ये सुसंख्ये दशास्यं
व्यवहृततदनये द्राक् पुरद्वार ईशश्चतस्रो न्यरौत्सीत् पुरी पूर्यमाणा
करधृतचलशिलाशैलसालैः कपीन्द्रैर्महावारिवाहैः प्लवो वा चकम्पे
॥ १२६ ॥

इति श्रीरघुवर्यतीर्थविरचिते वृत्तरत्नाकरोदाहरणे श्रीरघुनाथ-विजये समवृत्तबन्धः द्वितीयः ॥[3]

---

प्रचितकदण्डकः । लक्षणं यथा—

प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ।

यत्र पादेषु क्रमेण नगणद्वयानन्तरं सप्त यगणाः भवन्ति तत्र प्रचित-काख्यो दण्डकः ।

अरिभिः अवार्य इति । शङ्कारहितेनात्मसैन्येन भीतिरहितेनेति यावत् । पुरद्वाः इति स्त्रीलिङ्गः शब्दः । ॥ १२६ ॥



---

1 रघुवार्यो (क) 2 शरासनः (क) 3 श्री कृष्णार्पणमस्तु (क)

—अर्धसमवृत्तप्रकरणम्—

**अथ राक्षसराट् द्रुतमादिशद्वासवजित्प्रमुखान् पिशिताशान् ।**
**युधि ते प्रययुः स्वयमप्यगात् राघवमभ्यसमाऽभवदाजिः ॥ १ ॥**

**द्रावित इन्द्रजिदानिलिनाभूत्स सशिलनीलविभीषणशक्त्या ।**
**प्रादिमहस्तपदो मृतिमापद्धरिसुतजातहतः स्वरुदंष्ट्रः ॥ २ ॥**

**अथ मारुतिना निहतोऽभूद्धूम्रपदोत्तरनेत्रपदोक्तः ।**
**इनजेन हतो युधि कुम्भो मारुतिरेव जघान निकुम्भम् ॥ ३ ॥**

---

उपचित्रम् ।　तल्लक्षणं यथा—

विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम् ।

यत्र प्रथमतृतीयपादयोः सगणत्रयं लघुर्गुरुः, समपादयोस्तु भगणत्रयं गुरुद्वयं चेति भवति तत्रोपचित्रम् ।

असमा आजिरभवदिति ज्ञेयम् ।　॥ १ ॥

द्रुतमध्या ।　तल्लक्षणं यथा—

भत्रयमोजगतं गुरुणी चेद्युजि च नजौ ज्ययुतौ द्रुतमध्या ।

यत्र प्रथमतृतीयपादयोः भगणत्रयं गुरुद्वयं, द्वितीयचतुर्थपादयोः नगणो जगणद्वयं यगणश्चेति भवन्ति तत्र द्रुतमध्यावृत्तम् । आनिली हनुमान् । प्रादिमहस्तपदः प्रहस्तः । स्वरुदंष्ट्रो वज्रदंष्ट्रः । हरिसुतजातः अङ्गदः ।　॥ २ ॥

वेगवती ।　तल्लक्षणं यथा—

सयुगात्सगुरू विषमे चेत् भाविह वेगवती युजि भाद्गौ ।

**सुप्तघ्नपुरोगराक्षसेन्द्रान् श्रीरामो[1]निजघान धन्विवर्यः ।**
**वेधोवरनष्टनाश[2](भीता) मारुत्यादिहताः परे च वीराः ॥ ४ ॥**

**अतिकायमीशसहजजन्मा नाशितवान् पटुं बहुविधास्त्रे ।**
**कमलासनास्त्रमुत मुक्त्वा मृत्युमयापयत् खरजमीशः ॥ ५ ॥**

---

यत्र प्रथमतृतीयचरणयोः सगणत्रयं गुरुः, द्वितीयचतुर्थयोः भगणत्रयं गुरुद्वयं चेति भवति तत्र वेगवतीवृत्तम् ।

धूम्ररद इति धूम्राक्ष इति यावत् । इनजः सुग्रीवः । ॥ ३ ॥

भद्रविराट् । तल्लक्षणं यथा–

ओजे तपरौ जरौ गुरुश्चेन्म्सौ ज्गौभद्रविराट् भवेदनोजे ।

यत्र प्रथमतृतीयपादयोः क्रमेण तगणजगणरगणाः गुरुश्च, द्वितीयचतुर्थयोः मगणसगणजगणाः गुरुद्वयं च भवन्ति तत्र भद्रविराट् छन्दः ।

'सुप्तघ्नो यज्ञकोपश्च शकुनिर्देवतापनिः ।
युद्धोन्मत्तश्च मत्तश्च देवान्तकनरान्तकौ ।
विद्युज्जिह्वः प्रमाथी च शुकसारणसंयुताः ।'

इत्येते राक्षसाः सुप्तघ्नपुरोगशब्देनोक्ताः ।

महाभारततात्पर्यनिर्णयः । अध्यायः ८

मूलमातृकयोः दृश्यमाने वेधोवरेत्यादिपाठे स्फुटतयाऽर्थः न प्रतिभाति । अतः वेधोवरनष्टनाशभीता परे वीराः मारुत्यादिहताः इति स्यादिति किञ्चिदक्षरपरिवर्तनं कृतम् । वेधोवरः ब्रह्मणस्सकाशादमृत्युरूपो यो वरः, तस्य यन्नष्टं तस्माज्जनितया नाशभीत्या युता इति ज्ञेयम् ॥ ४ ॥

केतुमती । तल्लक्षणं यथा–

---

1 निजघान (क) 2 भीतैर्मीतृत्यादि (क) भीतेन्मारुत्यादि (फ)

**सकलांश्च निरस्य रावणस्तत आगाद्रघुवीरसोदरम् ।**
**अमुचद्विधिदत्तसायकं स मुमोहाथ चकर्ष तं द्रुतम् ॥ ६ ॥**

**अथ मारुतिमुष्टिपीडितो दशको मोहमगादितसंज्ञः ।**
**अमुचत्प्रदरान् रघूत्तमे रघुराट् तं व्यतनोदतिशोच्यम् ॥ ७ ॥**

---

असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद्गः ।

यत्र प्रथमतृतीयचरणयोः सगणजगणसगणा गुरुश्च द्वितीयचतुर्थयोः भगणरगणनगणाः गुरुद्वयं चेति भवन्ति तत्र केतुमतीवृत्तम् ।

ईशसहजजन्मा लक्ष्मणः । कमलासनो ब्रह्मा तस्यास्त्रं ब्रह्मास्त्रमिति प्रसिद्धम् । खरजः खरराक्षससूनुः मकराक्ष इति प्रसिद्धः । ॥ ५ ॥

वियोगिनी । अस्या एव सुन्दरीति नामान्तरम् । सुन्दरीलक्षणं यथोदितं वृत्तरत्नाकरे—

अयुजोर्यदि सौ जगौ युजोः सभराल्गा यदि सुन्दरी तदा ।

यत्र प्रथमतृतीयचरणयोः सगणद्वयं जगणो गुरुश्च, द्वितीयचतुर्थयोः सगणभगणरगणाः गुरुश्च भवन्ति तत्र वियोगिनीछन्दः ।

विधिना ब्रह्मणा दत्तः सायकः शक्त्याख्यः । मोहमाप्तं लक्ष्मणं स्ववशं नेतुं रावणः चकर्षेत्यर्थः । ॥ ६ ॥

शोकवती ।

यत्र सगणद्वयं जगणो गुरुश्च प्रथमतृतीययोः, सगणो भगणद्वयं गुरुद्वयं च द्वितीयचतुर्थयोः, तत्र शोकवती । एतद्वृत्तं लक्षणं च मुद्रितवृत्तरत्नाकर-पुस्तकेषु न दृश्यते । दशकः । दश कानि शिरांसि अस्येति दशाननो रावणः । इतसंज्ञो लब्धसंज्ञः । प्रदराः बाणाः । ॥ ७ ॥

**पूर्वोद्भवेनाश्वथ कुम्भकर्णः प्रबोधितोऽदन् सकलान् हरीन्द्रान् ।**
**भूभृद्धराभो [1]धृतभूभृदङ्गो ह्यचिन्तयन् लक्ष्मणमाप रामम् ॥ ८ ॥**
**रघूत्तमोऽखण्डयदस्य बाहू पादौ शिरश्चाशु शरैरथास्यत् ।**
**पयोनिधावैधत सोऽमरेन्द्रैर्वृष्टं प्रसूनं रघुवर्यमूर्ध्नि ॥ ९ ॥**
**अथ वासवजित् प्लवगेश्वरान् द्विरसनास्त्रबलेन निबद्धवान् ।**
**त्रिरिमानवति स्म खगेश्वरो निजगरुत्पवनेन, सकृत् , द्रुतम् ॥१०॥**

---

आख्यानिका । तल्लक्षणं यथा—

आख्यानकी तौ जगुरू ग ओजे जातावनोजे जगुरू गुरुश्चेत् ।

यत्र क्रमेण प्रथमतृतीययोः तगणद्वयं जगणः गुरुद्वयं, द्वितीयचतुर्थयोः जगणतगणजगणाः गुरुद्वयं च भवन्ति तत्राख्यानकीवृत्तम् । पूर्वोद्भवो रावणः । भूभृद्धरो मेरुपर्वतः । कुम्भकर्णः गिरिमेव करे धृत्वा समागतो युद्धायेति 'धृतभूभृदङ्ग'विशेषणं तस्य । ॥ ८ ॥

विपरीताख्यानिका । (विपरीताख्यानकीति वृ. र. टीकायां नारायणभट्टः ।) तल्लक्षणं यथा—

जतौ जगौ गो विषमे समे चेत्तौ ज्गौ ग एषा विपरीतपूर्वा ।

यत्र क्रमेण प्रथमतृतीयचरणयोः जगणतगणजगणाः गुरुद्वयं, द्वितीयचतुर्थचरणयोः तगणद्वयं जगणः गुरुद्वयं चेति भवन्ति तत्र विपरीताख्यानिकावृत्तम् ।

शिरश्च पयोनिधावस्यत् । स पयोनिधिः ऐधत मर्यादामतिचक्रामेत्यर्थः । समुद्रस्य वृद्धौ गिरीन्द्रसदृक्षस्य अस्य शिरसः पतनमेव कारणमिति ज्ञेयम् । अनेन कुम्भकर्णस्याकृतिरूहितुं शक्येत । ॥ ९ ॥

हरिणच्युता । (हरिणप्लुतेति वृत्तरत्नाकरे) तल्लक्षणं यथा—

---

1 धृतभूधराङ्गो (क)

**अथ सकृदनिलात्मजः कपीनवति पुराऽऽहृतभूभृदौषधैः ।**
**अहरदपि [1]तदस्त्रमीश्वरः प्रकटितदासबलोऽस्त्रतेजसा ॥ ११ ॥**

---

सयुगासलघू विषमे गुरुर्युजि नभौ भरकौ हरिणप्लुता ।

यत्र क्रमेण प्रथमतृतीयचरणयोः सगणत्रयं लघुर्गुरुश्च, द्वितीयचतुर्थयोः नगणः भगणद्वयं रगणश्चेति भवन्ति तत्र हरिणप्लुतावृत्तम् ।

निजपक्षवीजनेन, सकृत् द्रुतमिति त्रिप्रकारेणेति अर्थः । पुरा रामावतारग्रहणसमये सर्वदेवानामिव आत्मनोऽपि भगवत्सेवावकाशं प्रति प्रार्थितो विष्णुः भूमौ विनैव अवतारसम्बन्धि जन्म, इन्द्रजित्कृतसर्पास्त्रमोचनरूपसेवायै गरुडमादिशदिति ज्ञेयम् ।

**महाभारततात्पर्यनिर्णयः । अध्यायः ८**
॥ १० ॥

अपरवक्त्रम् । वैतालीयान्तर्गतत्वेऽपि संज्ञान्तरविधानार्थमुक्तिरिति वृत्तरत्नाकरे । लक्षणं यथा—

अयुजि ननरलाः गुरुः समे न्जमपरवक्त्रमिदं ततो जरौ ।

यत्र प्रथमतृतीयचरणयोः नगणद्वयं रगणः लघुर्गुरुश्च, द्वितीयचतुर्थयोः नगणो जगणद्वयं रगणश्च भवति तत्रापरवक्त्रम् ।

अवति पुरेति ररक्षेत्यर्थे । औषधैरिति बहुवचनात् मृतसञ्जीविनीसन्धानकरणीसवर्णकरणीविशल्यकरणीतिनामकं औषधचतुष्टयं महाभारततात्पर्यनिर्णयानुसारतो ज्ञेयम् । प्रकटितदासबल इति । स्वभक्तयोर्दासयोर्गरुडहनूमतोः आत्मशक्तिप्रदर्शनार्थं कश्चन सुसन्दर्भः भगवता श्रीरामेण कल्पित आसीत् । प्रथमं गरुत्मान् इन्द्रजिन्मुक्तनागपाशमोचनकाले तद-

---

1 तदस्त्र (क)

**अगमयदथ राघवोऽनुजातं हरिरिपुसंहृतये पुरैव होमात् ।**
**हरिवरसहितो गतः स तेन व्यतनुत संयुगमद्भुतास्त्रशस्त्रैः**
**॥ १२ ॥**

---

नन्तरं हनूमान् गन्धमादनपर्वताहरणकाले च स्वशक्तिविशेषं प्रकटीकृत्य परमात्मनः कृपापात्रे बभूवतुः । तदनन्तरं श्रीरामः लक्ष्मणोपरि मुक्तमस्त्रं स्वास्त्रेण न्यवारयदिति कथासन्दर्भः ।

**महाभारततात्पर्यनिर्णयः । अध्यायः ८**

॥ ११ ॥

एतत्पद्यात्पूर्वं 'क' मातृकायां अधिकः पाठः एवं दृश्यते ।

'अवदन्निजसेवनोत्सुकं प्राक्कमलेशोऽवनिजन्मवर्जितं तम् ।
कृतमिन्द्रजितोरगास्त्रबन्धं हर कीशेष्विति वीश्वरोऽकरोत्तम् ॥'

वसन्तमालिका । मालभारिणीति यद्वृत्तं जयदाम्नि सविमर्शं सम्पादिते वृत्तरत्नाकरे दृश्यते तस्य लक्षणमेवास्यापि । यथा—

ससजाः प्रथमे पदे गुरू चेत् सभरा येन च मालभारिणी स्यात् ।

यत्र प्रथमतृतीयचरणयोः क्रमेण सगणद्वयं जगणो गुरुद्वयं द्वितीय-चतुर्थयोः सगणभगणरगणयगणाश्च भवन्ति तत्र मालभारिणीसदृशं वसन्त-मालिकावृत्तम् ।

पुष्पिताग्रा । तल्लक्षणं यथा ।

अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।

यत्र प्रथमतृतीयचरणयोः क्रमेण नगणद्वयं रगणो यगणश्च द्वितीय-चतुर्थयोः नगणो जगणद्वयं रगणो गुरुश्चेति भवन्ति तत्र पुष्पिताग्रावृत्तम् ।

**राघवानुजः शरैः शरान् निवार्य तथास्त्रमस्त्रपुङ्गवैर्बलारिशत्रोः ।**
**मस्तकं चकर्त दैवतैर्बभूव नुतः प्रसूनवृष्टिपूर्वकं प्रहृष्टैः ॥ १३ ॥**

**इति श्रीरघुवर्यतीर्थविरचिते वृत्तरत्नाकरोदाहरणे श्रीरघुनाथविजये अर्धसमवृत्तप्रबन्धः तृतीयः ।**

---

अस्यैव नामान्तराणि यथा वृत्तरत्नाकरे–

वदन्त्यपरवक्त्राऽऽख्यं वैतालीयं विपश्चितः ।

पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ।

परावती । (यवमतीति वृत्तरत्नाकरः) तल्लक्षणं यथा–

स्यादयुग्मके रजौ रजौ समे चेज्जरौ जरौ गुरर्यवात्परा मतीयम् ।

यत्र प्रथमतृतीयचरणयोः क्रमेण रगणजगणरगणजगणाः द्वितीयचतुर्थयोः जगणरगणजगणरगणाः गुरुश्चान्ते भवन्ति तत्र परावती(यवमती)-वृत्तम् ।



—विषमवृत्तप्रकरणम्—

**अथासंख्यमहाम्भोधिं**
**रथायुधाख्ययादसं महाघोषम् ।**
**त्वङ्गत्तुरङ्गतरङ्गं प्राप्तं वीक्ष्य वानरेन्द्रा**
**दुद्रुवू रामवेलारुणद्रूपाण्यनन्तानि दधौ च रामः ॥ १ ॥**
**अगणितनिजरूपैः**
**सपदि हतबलततिरगात्सः ।**
**सुरवरकृतनुतिसहितकुसुमवृष्टिं**
**प्रहृतमकृत निशिचरपतिरथ कपिवरसङ्घम् ॥ २ ॥**

---

पदचतुरूर्ध्वम् ।　तल्लक्षणं यथा—
मुखपादोऽष्टभिर्वर्णैः
परे स्युर्मकरालयैः क्रमाद्वृद्धैः ।
सततं तस्य विचित्रैः पादैः संपन्नसौन्दर्यं
तदुदितममलमतिभिः पदचतुरूर्ध्वाभिधं वृत्तम् ।

यत्र प्रथमपादे अष्टौ वर्णाः द्वितीयपादे द्वादशवर्णाः तृतीयपादे षोडशवर्णाः तथा चतुर्थपादे विंशतिवर्णाश्च सम्भवन्ति तत्र पदचतुरूर्ध्वाभिधं वृत्तम् ।　मकरालयः समुद्रः ।　प्रथमपादानन्तरपादेषु क्रमेण वर्णचतुष्टयस्याधिक्यम् ।　अस्मिन्वृत्ते गुरुलघुनियमो नास्ति ।　कर्णमाधुर्यमेव सम्पाद्यम् ।　　　　　　　　　　　　　　　　　　　　॥ १ ॥

आपीडः ।　तल्लक्षणं यथा—
प्रथममुदितवृत्ते
विरचितविषमचरणभाजि ।
गुरुकयुगलनिधन इह सहित आङा
लघुविरचितपदविवृतियतिरिति भवति पीडः ।

**प्रहृतमुत रघुपसहजातं**
**पवनज उरुशक्त्या ।**
**सुरगिरिनिकटगिरिमवितुमुपनिन्ये**
**सदगदमथ रघुपतिनिशिचरपतिरण आसीत् ॥ ३ ॥**

---

पूर्वस्मिनेव पदचतुरूर्ध्वे अन्त्यौ वर्णौ सर्वत्र पादेषु गुरू स्यातां शेषाः लघवः तत्र आङा सहितः पीडः, 'आपीड' इति उक्तो भवति। लघुदर्ण-विरतावेव यतिः । अत्रापि कर्णमाधुर्यमेव सम्पाद्यं लघुवर्णैः ।

अगणितनिजरूपैः इत्यादेः पोषकं पद्यं महाभारततात्पर्यनिर्णये एवं दृश्यते। 'स एव सर्वत्र च दृश्यमानो विदिक्षु दिक्षु प्रजघान सर्वशः' इत्यादि (८-१८३) ॥ २ ॥

कलिका । तल्लक्षणं यथा—

प्रथममितरचरणसमुत्थं
श्रयति यदि लक्ष्म ।
इतरदितरगदितमपि च यदि तुर्यं
चरणयुगलकमविकृतमपरमिति कलिका सा ।

कलिकापि रूपान्तरमापीडस्य । प्रथमपादः आपीडस्य द्वितीयपाद इव, द्वितीयपादः प्रथमपाद इव च, आद्ययोः चरणयोः व्यत्ययेन यत्र निवेश्यते तृतीयचतुर्थौ तु आपीडस्य इव भवतः तदा कलिका भवति ।

१२+८+१६+२० क्रमशः पादाक्षराणि ।

सुरगिरिनिकटगिरिः गन्धमादनः । सदगदमिति गन्धमादन-विशेषणं, सदोषधियुक्तमित्यर्थः । अवितुं रक्षितुम् ।

**अवदद्पि चतुरकविलोको**
**रणमिममयमनुकुरुत इति पयोधिः ।**
**स्वमित्र, तदिह मे वाक्**
**प्रभवति न हि, दशकक्कदशकमहृत सकृदीशः ॥ ४ ॥**

**पुनरुदितदशशिरसि रामो**
**दशशिरसि निरभिनदुर उरुशरेण ।**
**उत निपतित इत मृतमुपगतवति सुरवृन्दं**
**रघुपमितमनंसीत् ॥ ५ ॥**

---

लवली । तल्लक्षणं यथा–

द्विगुरुयुतसकलचरणान्ता
मुखचरणगतमनुभवति च तृतीयः ।
अपरमिह हि लक्ष्म
प्रकृतमखिलमपि यदिदमनुभवति लवली सा ॥

इयमप्यापीडस्यैव रूपान्तरम् । लवल्याः प्रथमचरणे द्वादशाक्षराणि द्वितीये षोडश, तृतीये अष्टौ तथा चतुर्थे विंशत्यक्षराणि च भवन्ति ।

रणमिममनुकुरुत इत्यादि । गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव ' इति वाल्मीकीये युद्धकाण्डे १०८ तमे सर्गे द्रष्टव्यम् । मे वाक् न प्रभवतीति विनयोक्तिः ।

कम् शिरः । दशकस्य कदशकं दशशिरांसीत्यर्थः । ॥ ४ ॥

अमृतधारा । तल्लक्षणं यथा–

—विषमवृत्तप्रकरणे उपस्थितप्रचुपितविभागः—

**अथ राघवः पुनरपीह**
**रिपुसहजमभ्यषेचयत् ।**
**हव्यभुजि निपतितां क्षितिजा—**
**कृतिमातनोच्छुभपरीक्षणच्छलात् ॥ ६ ॥**

---

प्रथममधिवसति यदि तुर्यं
चरमचरणपदमवसितगुरुयुग्मम् ।
निखिलमपरमुपरिगतमिति ललितपदयुक्ता
तदिदममृतधारा ॥

आपीडस्येव रूपान्तरमेषा । आपीडे प्रोक्तोऽष्टाक्षरात्मकः प्रथमचरणः यदि चतुर्थचरणो भवति शेषमापीडवदेव क्रमेण, तदाऽमृतधारावृत्तम् । रावणशिरांसि छिन्नानि शतशोऽपि पुनरुदितानीति वाल्मीकीये ।

अत्र प्रोक्त उरुशरः ब्रह्मास्त्रम् ।इतं सम्प्राप्तम् ।

रावणवधप्रोक्तौ यदमृतधाराच्छन्दः कविना प्रयुक्तं तदतीव युक्तियुक्तं प्रतिभति । अत्र रावणरूपदुष्टरक्षोविनिपातात् लोकायामृतधारा सुखरूपिणी प्रदत्ता इति हृद्यं कविहृदयं अत्र विद्योतते । ॥ ५ ॥

उद्गता । तल्लक्षणं यथा—

सजमादिमे सलघुकौ च
नसजगुरुकैरथोद्गता ।
त्र्यङ्घ्रिगतभनजला गयुताः
सजसा जगौ चरणमेकतः पठेत् ॥

**सुयशोऽग्रहीद्रघुपतिश्च**
**गिरिशनिलयादिहागताम् ।**
**अर्पितां हुतभुजा दयितां**
**मुदमीयतू रघुपभूमिपुत्रिके ॥ ७ ॥**

---

यत्र पादेषु क्रमेण सगणजगणसगणाः लघुश्च, नगणसगणजगणाः गुरुश्च भगणनगणजगणाः लघुगुरू, सगणजगणसगणजगणाः गुरुश्च भवन्ति तत्रोद्गतावृत्तम् ।

प्रथमपादे १०, द्वितीये १०, तृतीये ११ तथा चतुर्थे १३ वर्णाः भवन्ति ।

पुनरपीहेति । श्रीरामः पूर्वं आत्मनः शरणं प्राप्तं विभीषणं तदैव तत्रैव निशाचरराज्याधीशं चकार । रावणवधानन्तरं पुनश्च अभिषिच्य स्वभक्तमन्वग्रहीत् । ॥ ६ ॥

सौरभकम् । तल्लक्षणं यथा—

चरणत्रयं व्रजति लक्ष्म
यदि सकलमुद्गतागतम् ।
नौ भगौ भवति सौरभकं
चरणे यदीह भवतस्तृतीयके ॥

यस्य तृतीयचरणे रगणनगणभगणाः गुरुश्चेति भवन्ति शेषचरणा उद्गता सामान्यवत्तस्य सौरभकमिति नाम ।

शुभपरीक्षणच्छलादिति । वस्तुतस्तु पूर्वं सीतापहरणकाले, कैलासं प्राप्तायाः सीताया या आकृतिःपञ्चवट्यामासीत्, सैव रावणेनापहृताऽसीत् । तस्याः शुभपरीक्षणं तु अप्रासङ्गिकम् । तथापि लोकमनुकुर्वतो रामस्य चरितं यथा लोकेऽसन्दिग्धं आदर्शप्रायं भवेत्तदर्थं रामः तस्याः पातिव्रत्यपरीक्षणव्याजेन तां

**अथ पुष्पकस्थ इत आत्म–**
**नगरमखिलस्वसैन्ययुक् ।**
**ससहजदयित एतमभिश्रु–**
**तवार्तमाशु भरतो गतोऽनमत् ॥ ८ ॥**

**प्रेम्णा तं परिरभ्य मोदयन् जनमीशो**
**विशति स्म पुरमथाभ्यषेचि राज्ये ।**
**हनुमदिनसुतमुखं**
**परिजनमतिचतुरममानयदेषः ॥ ९ ॥**

---

अग्निं प्रवेशयामास । तत्रैव अग्निना कैलासादानीय दत्तां सीतां पुनरपि स्वीचकार । श्रीरामस्येदमनुकरणं केवलं लोकतृप्त्यर्थं आत्मनः आदर्शं संस्थापयितुं चासीत् । ॥ ७ ॥

ललितम् । तल्लक्षणं यथा–

नयुगं सकारयुगलं च
भवति चरणे तृतीयके ।
तदुदितमुरुमतिभिर्ललितं
यदि शेषमस्य खलु पूर्वतुल्यकम् ॥

यस्य तृतीयचरणे क्रमेण नगणद्वयं सगणद्वयं च भवति शिष्टचरणाश्चोद्गतावत् तस्य ललितमिति नामधेयम् । अत्र पुनः सगणस्थाने जगणनिवेशः किमर्थं कृत इति विचारणीयम् । ॥ ८ ॥

उपस्थितप्रचुपितम् । तल्लक्षणं यथा–

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत्
त्रितयं सनजरगास्तथा ननौ सः ।
त्रिनपरिकलितजयौ
प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥

**यज्ञानुत्तमकल्पकांश्चकार महात्मा**
**रमयज्ञनमिह सार्थकाह्वयोऽसौ ।**
**रविविधुसमसुतयुग्ममसृजदसमयशाः**
**कुशलवपदमतिकुशलं रघुराजः ॥ १० ॥**

---

यस्य वृत्तस्य प्रथमचरणे मगणसगणजगणभगणाः गुरुद्वयं च, द्वितीयचरणे सगणनगणजगणरगणाः गुरुश्च, तृतीयचरणे नगणद्वयं सगणश्च, चतुर्थचरणे नगणत्रयं जगणो यगणश्चेति भवन्ति तस्योपस्थितप्रचुपितमिति नाम । ॥ ९ ॥

वर्धमानम् । तल्लक्षणं यथा—

नौपादेऽथ तृतीयके सनौ नसयुक्तौ
प्रथमाङ्घ्रिकृतयतिस्तु वर्धमानम् ।
त्रितयमपरमपि पूर्वसदृशमिह भवति
प्रततमतिभिरिति गदितं लघुवृत्तम् ॥

यस्य वृत्तस्य प्रथमचरणे मगणसगणजगणभगणाः गुरुद्वयं च, द्वितीयचरणे सगणनगणजगणरगणाः गुरुश्च, तृतीयचरणे नगणद्वयं सगणो, नगणद्वयं सगण इति तथा चतुर्थचरणे नगणत्रयं जगणो यगणश्चेति क्रमेण भवन्ति तस्य वर्धमानमिति नाम ।

यज्ञानिति । 'पौण्डरीकाश्वमेधाभ्यां वाजिमेधेन चासकृत् ।
अन्यैश्च विविधैर्यज्ञैरयजत्पार्थिवर्षभः ।'

इत्यादि वा. रा. युद्धकाण्डोक्तेः (१२८-९४). रमयज्ञनमिति—रमन्ते योगिनो यस्मिन्नित्यादिना पदसार्थक्यमवगन्तव्यम् । कुशलवपदमिति । पदं लक्ष्म संज्ञा । तन्नामकं द्वंद्वं इति यावत् । ॥ १० ॥

**भूमिः पद्मजभूसमा बभौ बहुभाग्या**
**मनुजा अमनुजवद्बभुस्तदेत्थम् ।**
**सीतारमणो रघूत्तमः**
**सहजहनुमदिनजमुखैः सह रेमे ॥ ११ ॥**

---

शुद्धविराडार्षभम् । तल्लक्षणं यथा–

अस्मिन्नेव तृतीयके यदा तजराः स्युः
प्रथमे च विरतिरार्षभं ब्रुवन्ति ।
तच्छुद्धविराट् पुरः स्थितं
त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥

यस्य वृत्तस्य प्रथमपादे क्रमेण मगणसगणजगणभगणाः गुरुद्वयं च, द्वितीयपादे सगणनगणजगणरगणाः गुरुश्च, तृतीयपादे तगणजगणरगणाः, तथा चतुर्थपादे नगणत्रयं जगणो यगणश्चेति भवन्ति तस्य शुद्धविराडार्षभमिति नामधेयम्। पद्मजभूः सत्यलोकः फलवती भूमिः बहुसुखदायिनी सत्यवचनशीलैस्सत्पुरुषैरन्विता भूगतसत्यलोकवद्बभौ । सत्यशालिनो मनुष्याः गुणविशेषेणान्विता रेजुरित्यर्थः । रामराज्यस्य रूपं सूक्ष्मयोक्त्या एवं प्रदर्शितमत्र । ॥ ११ ॥

## विषमाक्षरछन्दःकोष्ठकम्

| छन्दोनाम | प्रथमचरणे | द्वितीयचरणे | तृतीयचरणे | चतुर्थचरणे |
|---|---|---|---|---|
| १ उद्गता<br>१०+१०+११+१३ | स.ज.स.लघुः | न.स.ज.गुरुः | भ.न.ज.ल.गु. | स.ज.स.ज.गु |
| २ सौरभकम्<br>१०+१०+१०+१२ | ,, | ,, | र.न.भ.गु. | ,, |
| ३ ललितम्<br>१०+१०+१२+१३ | ,, | ,, | न.न.स.स. | ,, |
| ४ उपस्थितप्रचुपितम्<br>१४+१३+९+१५ | म.स.ज.भ.गु.गु. | स.न.ज.र.गु. | न.न.स. | न.न.न.ज.य. |
| ५ वर्धमानम्<br>१४+१३+१८+१५ | ,, | ,, | न.न.स.न.न.स. | ,, |
| ६ शुद्धविराडार्षभम्<br>१४+१३+९+१५ | ,, | ,, | त.ज.र. | ,, |

इत्युपस्थितप्रचुपितविभागः

—गाथाप्रकरणम्—

**चकार योगी रघुवर्यनामकः**
**श्रीरामभद्रार्यशिष्यः प्रबन्धम् ।**
**एतं सुवृत्तं रघुनाथतुष्ट्यै**
**गृह्णन्त्वेनं सूरयः सारभाजः ॥ १२ ॥**

**वृत्तरत्नाकरोद्भूतवृत्तरत्नैरलङ्कृतम् ।**
**आत्मरत्नाकरोद्भूतवृत्तनायकरत्नकम् ।**
**प्रबन्धभूषणं रामो दधातु हृदये मुदा ॥ १३ ॥**

**इति श्रीरघुवर्यतीर्थविरचिते वृत्तरत्नाकरोदाहरणे रघुनाथविजये विषमवृत्तप्रबन्धश्चतुर्थः समाप्तः ॥**

**॥ श्रीकृष्णार्पणमस्तु श्रीरामाय नमः ॥**

---

विषमाक्षरगाथा । तल्लक्षणं यथा—

विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ।

यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः कथितम् ॥

यत्र, छन्दसः समस्तचरणेषु विषमाक्षराणि भवन्ति, यत्र वा चरणसंख्यैव विषमा भवेत् यत्र च तल्लक्षणनिरूपणं वा न कृतं स्यात् तत्र 'गाथा' भवतीति विदुषां मतम् ।

सुवृत्तमिति । शोभनैर्वृत्तैः छन्दोभिः सम्पन्नमथ च वृत्तं चरितं शोभनेन श्रीरामचन्द्रवृत्तान्तेन युक्तमिति । सारभाक् । सारः स्थिरांशः श्रेष्ठो भागः । तं भजन्त इति सारभाजः पण्डिताः । ॥ १२ ॥

षट्पादवती गाथा—लक्षणं पूर्वमेवोक्तम् । तच्च विषमचरणवत्त्वम् ।

वृत्तरत्नाकरस्थैः वृत्तरूपैः, छन्दोरूपै रत्नैरलङ्कृतं, आत्मरत्नाकरे, स्वकीयहृदयसमुद्रे सञ्जातवृत्तनायकरत्नयुतं एतत्प्रबन्धरूपं भूषणं, यौगिवर्याः श्रीरघुवर्यतीर्थाः श्रीरामचन्द्रहृदये निधापयन्ति । ' हृदये दधातु ' इत्यनेन इदं प्रबन्धरूपं भूषणं न केवलं बाह्यसौन्दर्याभिवृद्धिहेतोः स्वोपास्यमूर्तेः, अपि तु तस्य हृदय एव निरन्तरं स्थानं यथा लभेत तथा समर्प्यते इति आत्मनः प्रबन्धरत्नस्य पावित्र्यं अमूल्यत्वं च समर्थयन्ति श्रीचरणाः । ' मुदा ' इत्यनेन यद्यपीदं प्रबन्धभूषणं अल्पगात्रं, भगवदाशयगतकृतिकौशलहीनमपि वा भवेत्तथापि ' पत्रं पुष्पं फलं तोयं इत्यादिभगवद्वाक्यानुसारेण भगवान् श्रीरामचन्द्रः अनेनाल्पकेनापि भूषणेन सन्तुष्टो भवतु इति आत्मनः स्वच्छतरं भक्तिभावं प्रकटयन्ति । ॥ १३ ॥

॥ श्रीसीतारामाय नमः ॥

## रघुनाथविजयस्य सुभाषितानि

# रघुनाथविजयस्य अकारादिश्लोकानुक्रमणी

# अशुद्धिशुद्धिपत्रम्

| मुद्रितं | पठनीयं | श्लो.सं. | पु.सं. |
|---|---|---|---|
| दया | दयां | ८ | ५ |
| पृषिवीशो | पृथिवीशो | १ | २५ |
| प्राप्तखेदां | प्राप्तखेदा | ७ | २७ |
| उरूगूण | उरुरण | ४१ | ४० |
| स्यनाथं | स्वनाथं | ४५ | ४२ |
| कृता | कृताः | ४८ | ४३ |
| बणेन | बाणेन | ५६ | ४६ |
| आवस | आवास | ६३ | ४७ |
| वङ्गाद्गजा | वशाद्गजा | ६६ | ५१ |
| किष्किन्धाकणडः | किष्किन्धाकाण्डः | | ५५ |
| मिन्दि | भिन्धि | ९१ | ६२ |
| वशंज | वंशज | १११ | ७२ |
| कुतश्चगतः | कुतश्चागतः | ११७ | ७५ |
| श्चाहितन् | श्चाहितान् | ११९ | ७६ |
| ज्ञतवार्ता | ज्ञातवार्ता | १२२ | ७८ |

**विशेषांशः –**

३१ तमे पृष्ठे १७ श्लोके प्रोक्तस्योपस्थितावृत्तस्य पादान्ते गुरुद्वयं दृश्यते । तत्तु वृत्तरत्नाकरलक्षणसंगतं न भवति ।